पश्यकात्माभिनिवेशत्माजनार्थम् ॥ कथं विज्ञेयं कति विज्ञेयानि किमर्थं विज्ञेयपरीक्षा। अविकल्पनतोऽपि विकल्पनतोऽपि हेतुतोऽपि प्रवृत्तितोऽपि निमित्ततोऽपि नैमित्तकतोऽपि(ii) विपक्षप्रतिपक्षतोऽपि सूक्ष्मप्रभेदतोऽपि [ Ch.5b ] विज्ञेयं द्रष्टव्यम्। सर्वाणि विज्ञेयानि। द्रष्टा[4] आत्माभिनिवेशत्याजनार्थम् ॥ कथमभिज्ञेयं कत्यभिज्ञेयानि किमर्थमभिज्ञेयपरीक्षा। संक्रान्तितोऽपि अनुश्रवतोऽपि चरितप्रवेशतोऽपि आगतितोऽपि गतितोऽपि निःसरणतोऽपि[5]। सर्वाण्यभिज्ञेयानि। (iii) सानुभावात्माभिनिवेशत्याजनर्थम् ॥

कथं रूपि कति रूपीणि किमर्थं रूपिपरीक्षा। रूपि[6] तदात्मतोऽपि भूताश्रयतोऽपि नन्दीसमुदयतोऽपि प्रदेशतो[7]ऽपि देशव्याप्तितोऽपि देशोपदे(श)तोऽपि देशगोचरतोऽपि द्वयसमय[1] गोचरतोऽपि सम्बन्धतोऽप्य [ T.52a ] नुबन्धतोऽपि प्ररूपणतोऽपि व्याबाधन(iv)तोऽपि संप्रापणतोऽपि संचयव्यवस्थानतोऽपि बहिर्मुखतोऽपि अन्तर्मुखतोऽपि आयततोऽपि परिच्छिन्नतोऽपि तत्कालतोऽपि निदर्शनतोऽपि रूपि द्रष्टव्यम्। सर्वाणि रूपीणि यथायोगं वा। रूप्या(त्मा)भिनिवेशत्याजनार्थम् ॥ कथमरूपि कत्यरूपीणि किमर्थमरूपिपरीक्षा। रूपिविपर्ययेणाप्य[1a] रूपि(v)। सर्वाण्यरूपीणि यथायोगं वा। अरूप्यात्माभिनिवेशत्याजनार्थम् ॥ कथं सनिदर्शनं कति सनिदर्शनानि किमर्थं सनिदर्शनपरीक्षा। चक्षुर्गोचरः सनिदर्शनम्। शिष्टस्य रूपिवत् प्रभेदः। सर्वाणि सनिदर्शनानि यथायोगं वा। चाक्षुषा[2] त्माभिनिवेशत्याजना (iv) [ Ph. 1B4. Ms. 8b ] र्थम् ॥ कथमनिदर्शनं कत्यनिदर्शनानि किमर्थमनिदर्शनपरीक्षा। सनिदर्शनविपर्ययेणानिदर्शनं द्रष्टव्यम्। सर्वाण्यनिदर्शनानि यथायोगं वा। (अ)चाक्षुषा[3] त्माभिनिवेशत्याजनार्थम्। कथं सप्रतिघं कति सप्रतिघानि किमर्थं सप्रतिघ [ T. 62b. ] परीक्षा। यत् सनिदर्शनं सप्रति (i) घमपि तत्। अपि खलु त्रिभिः कारणैः सप्रतिघं द्रष्टव्यम्। जातितोऽपि उपचयतोऽपि अपरिकर्मकृततोऽपि। तत्र जातितः यद्य [4] (द)न्योऽन्यमावृणोत्याक्रियते च। तत्रोपचय(त): परमाणोरूर्द्ध्वम्। तत्रापरिकर्मकृततः यन्न समाधिवशवर्त्तिरूपम्। अपि खलु प्रकोपपदस्थानतः सप्रतिघम्। सर्वाणि सप्रतिघानि (ii) यथायोगं वा।

---

४. द्रष्टायात्मा॰ इत्युचितम्। ५. ची॰ गभिज्ञेयं द्रष्टव्यम् एवमुत्तरत्र सर्वत्र प्रस्तावितेन सह "द्रष्टव्यम्" इत्यागच्छति। ६. ची॰ भो॰ रप॰ ७. भाष्ये त्वेवं प्रतीयते भा॰ सप्रदेशतः। १. आ. ची. द्वयसम॰। १a. मू॰ पि। २, ३. मू॰ चक्षुषा॰। ४. ची॰ रूपधर्माः।

असर्वगतात्माभिनिवेशत्याजनार्थम् ॥ कथमप्रतिघं कत्यप्रतिघानि किमर्थमप्रतिघपरीक्षा। सप्रतिघविपर्ययेणाप्रतिघम्। सर्वाण्यप्रतिघानि यथायोगं वा। सर्वगतात्माभिनिवेशत्याजनार्थम् ॥

कथं सास्रवं कति सास्रवाणि किमर्थं सास्रवपरीक्षा। आस्रवतदात्मतोऽपि आ(III)स्रवसंबन्धतोऽपि आस्रवानुबन्धतोऽपि आस्रवानुकूल्यतोऽपि आस्रवान्वयतोऽपि[5] सास्रवं द्रष्टव्यम्। पञ्चोपादानस्कन्धाः सास्रवाः[6] पञ्चदश धातवो दशायतनानि त्रयाणां धातूनां द्वयोश्चायतनयोः प्रदेशः। आस्रवयुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथमनास्रवं कत्यनास्रवाणि [ T. 63a ] किमर्थमनास्रवपरीक्षा। (IV)सास्रवविपर्ययेणानास्रवम्। पञ्चानुपादानस्कन्धाः त्रयाणां धातूनां द्वयोश्चायतनयोः प्रदेशः[7]। [ Ch. 6a ] आस्रववियुक्तात्मात्माभिनिवेशत्याजनार्थम्। कथं सरणं कति सरणानि किमर्थं सरणपरीक्षा। यद्रूपान् रागद्वेषमोहानागम्य शस्त्रादानदण्डादानकलहभण्डनविग्रहविवादाः संभव(V)न्ति तदात्मतोऽपि तत्सम्बन्धतोऽपि तद्बन्धतोऽ[1]पि तदनुबन्धतोऽपि तदानुकूल्यतोऽपि तदन्वयतोऽपि[2] सरणं द्रष्टव्यम्। यावन्ति सास्रवाणि तावन्ति सरणानि। रणयुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथमरणं कत्यरणानि किमर्थमरणपरीक्षा। सरणविपर्ययेणारणम्। यावन्त्यनास्रवाणि तावन्त्यर(VI)[ Ph. 1A5. Ms. 9a ] णानि। रणविप्रयुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथं सामिषं कति सामिषाणि किमर्थं सामिषपरीक्षा। यद्रूपान् रागद्वेषमोहानागम्य पौनर्भविकमात्मभावमध्यवस्यति तदात्मतोऽपि तत्सम्बन्धतोऽपि तद्बन्धतोऽपि [3]तदनुबन्धतोऽपि तदानुकूल्यतोऽपि तदन्वयतोऽपि[4] सामिषं द्रष्टव्यम्। याव(I)न्ति सरणानि [ T. 63b ] तावन्ति सामिषाणि। आमिषयुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथं निरामिषं कति निरामिषाणि किमर्थं निरामिषपरीक्षा। सामिषविपर्ययेण निरामिषम्। यावन्त्यरणानि तावन्ति निरामिषाणि। आमिषवियुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथं गृधाश्रितं कति गृधा(II)श्रितानि किमर्थं गृधाश्रितपरीक्षा। यद्रूपान् रागद्वेषमोहानागम्य पञ्चकामगुणानध्यवस्यति तदात्मतोऽपि तत्सम्बन्धतोऽपि

५. ची० आस्रवजातितोऽपि इत्यधिकम्। ६. ची० सास्रवा इति वाक्यस्यान्ते प्रदत्तम्। ७. ची० अनास्रवा इत्यधिकम्।

१. ची० नास्ति। २. ची० तज्जातितोऽपि इत्यधिकम्। ३. ची० नास्ति। ४. ची० तज्जातितोऽपि इत्यधिकम्।

तद्धन्धतोऽपि[5] तदनुबन्धतोऽपि तदानुकूल्यतोऽपि तदन्वयतोऽपि[6] ग्रेधाश्रितं द्रष्टव्यम्। यावन्ति सामिषाणि तावन्ति ग्रेधाश्रितानि। ग्रेधयुक्तात्माभिनिवे(iii) शत्याजनार्थम्। कथं नैष्कम्याश्रितं कति नैष्कम्याश्रितानि किमर्थं नैष्कम्याश्रितपरीक्षा। ग्रेधाश्रितविपर्ययेण नैष्कम्याश्रितम्[7]। यावन्तिनिरामिषाणि तावन्तिनैष्कम्याश्रितानि। ग्रेधवियुक्तात्माभिनिवेशत्याजनार्थम्॥ कथं संस्कृतं कति संस्कृतानि किमर्थं संस्कृतपरीक्षा यस्योत्पा(iv) दोऽपि प्रज्ञायते व्ययोऽपि स्थित्यन्यथात्वमपि तत्सर्वं संस्कृतं द्रष्टव्यम्। सर्वाणि संस्कृतानि स्थापयित्वा धर्मधात्वायतनैकदेशम्। अनित्यात्माभिनिवेशत्याजनार्थम्॥ कथमसंस्कृतं कत्यसंस्कृतानि किमर्थं [ T.64a ] मसंस्कृतपरीक्षा। संस्कृतविपर्ययेणासंस्कृतम्[7]। धर्मधात्वायतनैकदेशः[8]। नित्या( v )त्माभिनिवेशत्याजनार्थम्। अनुपादान[9] स्कन्धाः संस्कृतं वक्तव्यमसंस्कृतं वक्तव्यम्(?)। न संस्कृतं नासंस्कृतं वक्तव्यम्। तत्कस्य हेतोः। कर्मक्लेशानभिसंस्कृततामुपादाय न संस्कृतम्। कामकारसंमुखीविमुखीभावतामुपादाय नासंस्कृतम्॥ यदुक्तं भगवता द्वयमिदं संस्कृतं नासंस्कृतं चेति [?]॥ तत्कथं येनार्थेन संस्कृतं (vi) [ Ph. 1B5. Ms. 9b ] न तेनार्थेनासंस्कृतम्। येनासंस्कृतं न तेनार्थेन संस्कृतमित्यत्र नयो द्रष्टव्यः[8]॥ कथं लौकिकं कति लौकिकानि किमर्थं लौकिकपरीक्षा। त्रैधातुकपर्यापन्नं लौकिकं[1] लोकोत्तर[5] पृष्ठलब्धं च तत्प्रतिभासम्। स्कन्धानामेकदेशः पञ्चदश धातवः दशायतनानि [ Ch. 6b ] त्रयाणां धातूनां द्वयोश्चायतनयोः प्रदे(i)शः[6] [7]। आत्मनि लोकाभिनिवेशत्याजनार्थम्॥ कथं लोकोत्तरं कति लोकोत्तराणि किमर्थं लोकोत्तरपरीक्षा। त्रैधातुकप्रतिपक्षो(ऽ)[8] विपर्यासनिष्प्रपञ्चनिर्विकल्पतया च निर्विकल्पं लोकोत्तरम्। अपि खलु पर्यायेण लोको [ T 64b ] त्तरपृष्ठलब्धं लोकोत्तरम्। (अ) लौकिका[9] श्रिततामुपादाय। स्कन्धानामेकदेशः(ii)त्रयाणां धातूनां द्वयोश्चायतनयोः[10]। केवलात्माभिनिवेशत्याजनार्थम्॥

---

५. चीο नास्ति। ६. चीοतज्ज्ञानितोऽपि इत्यधिकम्। ७. चीο द्रष्टव्यम् इत्यधिकम् एवमुत्तरत्रापि यथायोगं योज्यम्। ८. ची. असंस्कृतम् इत्यधिकम्। ९. ची. पञ्च इत्यधिकम्।

१. २. ची. वक्तव्यम्। ३. ची. वक्तव्यः। ४. चीο भोο लौकिकमिति तत्प्रतिभासम् इत्यस्यानन्तरमस्ति। ५. चीο οज्ञानο इत्यधिकम्। ६. चीο एकदेशः। ७. चीο लौकिकम् इत्यधिकम्। ८. भाο चीο अविपर्यास। भोο नन्वर्थकं किमपि नास्ति। ९. चीο भोο लोकोत्तराο। १०. चीο एकदेशः लोकोत्तरम् इत्यधिकम्।

कथमुत्पन्नं कत्युत्पन्नानि किमर्थमुत्पन्नपरीक्षा। अतीत[11] प्रत्युत्पन्नमुत्पन्नम्। सर्वेषामेकदेशः[12] अशाश्वतात्माभिनिवेशत्याजनार्थम्॥ अपि खलु चतुर्विंशतिविधमुत्पन्नम्। आद्युत्पन्नं प्रबन्धोत्पन्नम् उपचयोत्पन्नम्[iii] आश्रयोत्पन्नं विकारोत्पन्नं परिपाकोत्पन्नं हान्युत्पन्नं विशेषोत्पन्नं प्रभास्वरोत्पन्नम् अप्रभास्वरोत्पन्नं संक्रान्त्युत्पन्नं सबीजोत्पन्नम् अबीजोत्पन्नं प्रतिबिम्बविभुत्वनिदर्शनोत्पन्नं परंपरोत्पन्नं क्षणभङ्गोत्पन्नं संयोगवियोगोत्पन्नम् अवस्थान्तरोत्पन्नं च्युतोपपादोत्पन्नं[iv] संवर्त्तविवर्त्तोत्पन्नं पूर्वकालोत्पन्नं मरणकालो[13]त्पन्नम् अन्तरोत्पन्नं प्रतिसन्धिकालोत्पन्नं च॥ कथमनुत्पन्नं कत्यनुत्पन्नानि किमर्थमनुत्पन्नपरीक्षा। अनागतमसंस्कृतं चानुत्पन्नम्। सर्वेषामेकदेशः। शाश्वतात्माभिनिवेशत्याजनार्थम्॥ अपि खलूत्पन्नविपर्ययेणानुत्पन्नम्[14]॥ कथं[v] ग्राहकं कति ग्राहकाणि किमर्थं ग्राहकपरीक्षा। रूपी[15]न्द्रियं चित्तचैतसिकाश्च धर्मा ग्राहक[ T.65a ] द्रष्टव्यम्। त्रयः स्कन्धा रूपसंस्कारस्कन्धैकदेशः द्वादश धातवः षडायतनानि धर्मधात्वायतनैकदेशश्च। भोक्ता[16]त्मा भिनिवेशत्याजनार्थम्[iii]॥ [ Ph.1A6.Ms.10a ] अपि खलु अप्राप्तग्राहकं प्राप्तग्राहकं स्वलक्षणवर्त्तमानप्रत्येक[1] ग्राहकं स्वसामान्यलक्षणसर्वकालं सर्वविषयग्राहकं च ग्राहकं द्रष्टव्यम्। सामग्रीविज्ञान समुत्पत्तितामुपादाय। प्रज्ञप्तिकश्च ग्राहकवादो[2] द्रष्टव्यः॥ कथं ग्राह्यं कति ग्राह्याणि किमर्थं ग्राह्यपरीक्षा। यत्तावद् ग्राहकं[i] ग्राह्यमपि तत्। स्याद्ग्राह्यं न ( ग्राहकं ) ग्राहकगोचर एवार्थः। सर्वाणि (ग्राह्याणि) विषयात्माभिनिवेशत्याजनार्थम्॥ कथं बहिर्मुखं कति बहिर्मुखानि किमर्थं बहिर्मुख परीक्षा। कामप्रतिसंयुक्त[3] बहिर्मुखं स्थापयित्वा बुद्धशासने श्रुतमयचिन्तामयतदनुधर्मपरिगृहीतां[4] श्चित्तचैतसिकान् धर्मान्। च[ii]त्वारो धातवः द्वे चायतने तदन्येषां चैकदेशः[5]। अवीतरागात्माभिनिवेशत्याजनर्थम्। कथमन्तर्मुखं कत्यन्तर्मुखानि किमर्थमन्तर्मुखपरीक्षा। बहिर्मुखविपर्ययेणान्तर्मुखम्। चतुरो[6] धातुन् स्थापयित्वा द्वे चायतने तदन्येषामेकदेशः[7]। वीतरागात्माभिनिवेशत्याजना [ T.65b ]

---

११. भो० अतीतम् इति प्रतीयते। १२. चो० अतीतम् इत्यधिकम्। एवमुत्तरत्रापि यथायोग्यं योज्यम्। १३. भा० परकालो०। १४. चीं० द्रष्टव्यम्। १५. ची० रूपे०। १६. भोक्तात्मा इत्युचितम्। १. ची० विषय०। २. ची० वादो नास्ति। ३. ची० धर्मं इत्यधिकम्। ४. भा० प्रतिपत्तिसंगृहीतान् इति प्रतीयते। ५. ची० कामप्रतिसंयुक्तं बहिर्मुखम् इत्यधिकम्। ६. मु० चत्वारो। ७. ची० अन्तर्मुखम्।

र्थम् ॥ कथं क्लिष्टं iii कति क्लिष्टानि किमर्थं क्लिष्टपरीक्षा। अकुशलं निवृताव्याकृतं च क्लिष्टम्। निवृताव्याकृतं पुनः सर्वत्रगमनः संप्रयुक्तः क्लेशो[8] रूपारूप्य[9] प्रतिसंयु(क्त)श्च। स्कन्धानां दशानां धातुनां चतुर्णामायतनानामेकदेशः। क्लेशयुक्तात्माभिनिवेशत्याजनार्थम् ॥ [Ch. 7a] कथमक्लिष्टं कत्यक्लिष्टानि किमर्थमक्लिष्ट(प)रीक्षा। iv कुशलमनिवृताव्याकृतं चाऽक्लिष्टम्। अष्टौ धातवः अष्टायतनानि स्कन्धानां शेषाणां च धात्वायतनानामेकदेशः। क्लेशवियुक्तात्माभिनिवेशत्याजनार्थम् ॥

कथमतीतं कत्यतीतानि किमर्थमतीतपरीक्षा। उत्पन्ननिरुद्ध[10] लक्षणतोऽपि हेतुफलोपयो[11] गतोऽपि संक्लेशव्यवदानकारित्र समतिक्रान्तितोऽपि[v] हेतुपरिग्रहविनाशतोऽपि फलस्वलक्षणभावाभावतोऽपि स्मरसंकल्पनिमित्ततोऽपि अपेक्षासंक्लेशनिमित्ततोऽपि उपेक्षाव्यवदाननिमित्ततोऽपि अतीतं द्रष्टव्यम् सर्वेषामेकदेशः। प्रवर्त्तकात्माभिनिवेशत्याजनार्थम् ॥ कथमनागतं कत्यनागतानि किमर्थमनागतपरीक्षा। हेतौ सत्य[vi] नुत्पन्नतोऽपि अलब्धस्व[ T.66a ]लक्षणतोऽपि हेतुफलानुपयोगतोऽपि संक्लेश व्यवदानभावा[12] प्रत्युपस्थानतोऽपि हेतुस्वभा[13] वाभावतोऽपि अभिनन्दनासंक्लेश निमित्ततोऽपि अभिनन्दनाव्यवदाननिमित्ततोऽप्यनागतं द्रष्टव्यम्। सर्वेषामेकदेशः। प्रवर्त्तकात्माभिनिवेशत्याजनार्थम् ॥[9] vii

[Ph. I D6. Ms. 10b] कथं प्रत्युत्पन्नं कति प्रत्युत्पन्नानि किमर्थं प्रत्युत्पन्नपरीक्षा। उत्पन्नानिरुद्ध [1] लक्षणतोऽपि हेतुफलोपयोगानुपयोगतोऽपि संक्लेश व्यवदानप्रत्युपस्थानतोऽपि अतीतानागत भाव[2] निमित्ततोऽपि कारित्रप्रत्युपस्थानतोऽपि प्रत्युत्पन्नं द्रष्टव्यम्। सर्वेषामेकदेशः। प्रवर्त्तकात्माभिनिवेशत्याजनार्थमेव ॥[3] अतीतानागतप्रत्युत्पन्नं पुनः कथावस्तु न निर्वाणम्। प्रत्यात्मवेदनीयतया निरभिलप्यतामुपादाय भूतभव्यवर्त्तमानपरिहा[4] राधिष्ठानतां चोपादाय ॥ कथं

---

८. भो. मनोविज्ञानसंप्रयुक्तसहजातभेयसमूहश्च। अन्तग्राहदृष्टिश्च इत्यधिकम् (yid kyi rnam par śes pa dan mohuṅs par ıhan pa'i cig kyes pa'i 'jigs tshogs dan mthar 'djin par lta ba dan. ९. ची० ०धर्म०। १०. ची० ०स्व०। ११. मा० ०पभोग। १२. ची० स्वभावा०। १३. ची० भो० स्वलक्षण।

१. ची० स्वलक्षण। २. मू. भावमुभयतोऽक्षरद्वयमवलोपितम्। तत्र च प्रमावत (?) इत्येवं प्रतीयते भा० प्रभाव इति वर्त्तते तदनन्तरं चाक्षरमेकमवलोपितम्। ३. ची० भा० किमर्थम्। ४. भा० ची० भो व्यवहार इति कथनार्थकः।

कुशलं कति कुशलानि किमर्थं कुशलपरीक्षा । स्वभावतोऽपि सम्बन्धतोऽपि अनुबन्धतोऽपि उत्थानतोऽपि परमार्थतोऽपि उपपत्तिलाभतोऽपि प्रयोगतोऽपि पुरस्कारतोऽपि अनुग्रहतोऽपि परिग्रहतोऽपि प्रतिपक्षतोऽप्युपशमतोऽपि निष्यन्दतोऽपि कुशलं द्रष्टव्यम् । [5] स्कन्धानां दशानां धातूनां चतुर्णां चायतनानां प्रदेशः । धर्मयुक्तात्माभिनिवेशत्याजनार्थम् ॥ स्वभावतः कुशलं [ T. 66b] कतमत् श्रद्धादय एकादश चैतसिका धर्माः ॥ सम्बन्धतः कुशलं कतमत् । ( iii ) तत्संप्रयुक्ता धर्माः ॥ अनुबन्धतः कुशलं कतमत् । तेषामेव या वासना ॥ उत्थानतः कुशलं कतमत् । तत्समुत्थापितं कायकर्म वाक्कर्म ॥ परमार्थतः कुशलं कतमत् । तथता ॥ उपपत्तिलाभतः कुशलं कतमत् । एषामेव कुशलानां धर्माणां पूर्वाभ्यासमागम्य तद्रूपा विपाकाभिनिर्वृत्तिः । यथा तेष्वेव प्रकृत्या अप्रतिसंख्याय रुचिः संतिष्ठते ॥ प्रयोगतः कुशलं कतमत् । सत्पुरुषसंसेवामागम्य सद्धर्मश्रवणं योनिशो मनस्कारं धर्मानुधर्मप्रतिपत्तिं कुशलस्य भावना ॥ पुरस्कारतः कुशलं कतमत् । यत्तथागतं वा पुरस्कृत्य चैत्ये[6] वा पुस्तगते वा चित्रगते धर्मं[7] वा पुरस्कृत्य धर्माधिष्ठाने पुस्तके पूजाकर्म ॥ अनुग्रहतः कुशलं कतमत् । यच्चतुर्भिः संग्रहवस्तुभिः सत्त्वाननुगृह्णतः॥ परिग्रहतः कुशलं कतमत् । यद्दानमयेन पुण्यक्रियावस्तुना वा शीलमयेन[9] वा स्वर्गोपपत्तिपरिग्रहो वा आढ्यो कुलोपपत्तिपरिग्रहो वा व्यवदानानुकूल्यपरिग्रहो वा प्रतिपक्षतः कुशलं कतमत् । यो विदूषणाप्रतिपक्षः आधारप्रतिपक्ष ( iii ) दूरीभाव[10] प्रतिपक्ष विष्कम्भणाप्रतिपक्षः विसंयोगप्रतिपक्षः क्लेशावरणप्रतिपक्षः ज्ञेयावरणप्रतिपक्षः ॥ उपशमतः कुशलं कतमत् । यत्तत्पर्यादाय राग[ T.67a ]प्रहाणं[11] पर्यादाय द्वेषप्रहाणं पर्यादाय मोहप्रहाणं ( vii ) [ Ph.1A7.11a ] पर्यादाय सर्वक्लेशप्रहाणं संज्ञावेदयितनिरोधः सोपधिशेषो निरुपधिशेषो निर्वाणधातुरप्रतिष्ठितनिर्वाणं च ॥ निष्यन्दतः कुशलं कतमत् । उपशमप्राप्तस्य तदाधिपत्येन वैशेषिका गुणा अभिज्ञादयो लौकिकलोकोत्तराः साधारणासाधारणाः ॥ कथमकुशलं कत्यकुशलानि किमर्थमकुशलपरीक्षा । स्वभावतोऽपि संबन्धतोऽपि अनुबन्धतोऽपि उत्थानतोऽपि परमार्थतोऽपि उपपत्तिलाभतोऽपि प्रयोगतोऽपि पुरस्कारतोऽपि उपघाततोऽपि परिग्रहतोऽपि

---

५. ची पञ्चानां । ६. ची. चैत्यगते । ७. ची० भो० सद्धर्मं । ८. भो० नास्ति । ९. ची० पुण्यक्रिया वस्तुना इत्यावर्तते । १०. भो. अन्यत्र च मूले ( पृ० ) दूरीभाव । ची० अंशार्थकः शब्दः ( *fen* ) । मू० दरयब इनिवद् दृश्यते । ११ मू० अत्रोत्तरत्र च ग्रहणमिति पाठः ।

विपक्षतोऽपि परिपन्थतोऽप्यकुशलं द्रष्टव्यम्। [1] स्कन्धानां दशानां धातुनां चतुर्णामायतनानां प्रदेशः॥ अधर्मयुक्तात्माभिनि(ii) वेशत्याजनार्थम्॥ स्वभावतोऽकुशलं कतमत्। [2] मनःसंप्रयुक्तं रूपारूप्यावचरं च क्लेशं स्थापयित्वा तदन्यः क्लेशोपक्लेशो दुश्चरितसमुत्थापकः॥ सम्बन्धतोऽकुशलं कतमत्। तैरेव क्लेशोपक्लेशैः संप्रयुक्ता धर्माः॥ अनुबन्धतोऽकुशलं कतमत्। तेषामेव वासना॥ उत्थानतोऽकुशलं कतमत्। [iii] [3] समुत्थापितं कायवाक्कर्म॥ परमार्थतोऽकुशलं कतमत्। सर्वसंसारः। उपपत्तिलाभतोऽकुशलं कतमत्। यथापि तदकुशला [T.67b] भ्यास[4] स्तद्रूपो विपाकोऽभिनिवर्त्तते येनाकुशल एव रुचिः सन्तिष्ठते॥ प्रयोगतोऽकुशलं कतमत्। यथापि तदसत्पुरुषसंसेवामागम्यासद्धर्मश्रवणमयोनि(iv) शो मनस्कारं कायेन दुश्चरितं चरति वाचा मनसा दुश्चरितं चरति॥ पुरस्कारतोऽकुशलं कतमत्। यथापि तदन्यतमान्यतमं देवनिकायसन्निश्रयं[5] पुरस्कृत्य हिंसापूर्वकं वा कुदृष्टिपूर्वकं वा चैत्यं प्रतिष्ठापयति तत्र वा पूजाकर्म प्रयोजयति यत्र महान् जनकायोऽपुण्येन युज्यते। उपघाततोऽ(v) कुशलं कतमत्। यथापि तत्सत्त्वेषु[6] कायेन वाचा मनसा मिथ्या प्रतिपद्यते॥ परिग्रहतोऽकुशलं कतमत्। यथा तत्कायेन दुश्चरितं चरित्वा वाचा मनसा दुश्चरितं चरित्वा दुर्गतौ वा सुगतौ वा अनिष्टं फलं गृह्णात्यक्षेपकं वा परिपूरकं वा॥ विपक्षतोऽकुशलं कतमत्। ये प्रतिपक्षविपक्षा धर्माः॥ परि(vi) पन्थतोऽकुशलं कतमत् ये कुशलान्तरायिका धर्माः॥ कथमव्याकृतं कत्यव्याकृतानि किमर्थमव्याकृतपरीक्षा। स्वाभावतोऽपि सम्बन्धतोऽपि अनुबन्धतोऽपि उत्थानतोऽपि परमार्थतोऽपि उपपत्तिलाभतोऽपि प्रयोगतोऽपि पुरस्कारतोऽपि(vii) [Ph. 1B9 Ms. 11B] अनुग्रहतोऽपि उपभोगतोऽपि परिग्रहतोऽपि प्रतिपक्षतोऽपि उपशमतोऽपि निष्यन्दतोऽपि अव्याकृतं द्रष्टव्यम्। अष्टौ धातवः अष्टावायतनानि शेषाणां स्कन्धधात्वा- [T. 68a] यतना(ना)मेकदेशः। धर्माधर्मवियुक्तात्माभिनिवेशत्याजनार्थम्॥ स्वभावतोऽव्याकृतं कतमत्। अष्टौ रूपीणि धात्वायतनानि ससंप्रयोगं मनोजीवितेन्द्रियं निकायसभागो नाम(i)कायपदकायव्यञ्जनकायाश्च॥ सम्बन्धतोऽव्याकृतं कतमत्। अदुष्टाप्रसन्नचित्तस्य तैरेव नामपदव्यञ्जनकायैः परिगृहीताः चित्तचैतसिका

१. ची० पञ्चानां। २. ची० क्लिष्टमनः०। ३. ची० भो० तत्समुत्थापितं। ४. ची० भो० ०भ्यासतः। ५. ची० सन्निश्रय नास्ति। ६. ची० आपन्नोत्थितेषु।

धर्माः ॥ अनुबन्धतोऽव्याकृतं कतमत् । तेषामेवाभिलापवासना । उत्थानतोऽव्याकृतं कतमत् । तत्परिगृहीतैश्चित्तचैतसिकैर्धर्मैर्य[1] त्समुत्थापितं कायवाक्कर्म ॥ परमार्थतोऽव्याकृतं कतमत् । आका(ii)शमप्रतिसंख्यानिरोधश्च ॥ उपपत्तिलाभतोऽव्याकृतं कतमत् । अकुशलानां कुशलसास्रवाणां च धर्माणां विपाकः । प्रयोगतोऽव्याकृतं कतमत् अक्लिष्टाकुशलचेतस ऐर्यापथिकं शैल्पस्थानिकं च[1a] ॥ पुरस्कारतोऽव्याकृतं कतमत् । यथापि तदन्यतमान्यतमं देवनिकायसन्निश्रयं पुरस्कृत्य हिंसाकुदृष्टि[2] विवर्जितं चैत्यं वा प्रतिष्ठापयति पूजाकर्म वा(iii) प्रयोजयति यत्र महाजनकायो न पुण्यं प्रसवति नापुण्यम् ॥ अनुग्रहतोऽव्याकृतं कतमत् । यथापि तद्दासभृतककर्मकरेषु पुत्रदारेषु[3] [ T. 68b ] वा अदुष्टाप्रसन्नचित्तो दानं ददाति ॥ उपभोगतोऽव्याकृतं कतमत् । यथापि तदप्रतिसंख्याक्लिष्टचित्तो भोगान् भुंक्ते ॥ परिग्रहतोऽव्याकृतं कतमत् । यथापि तच्छिल्पस्थानस्याभ्यस्तत्वादायत्यां तद्रू पं(iii) मात्मभावपरिग्रहं करोति येन लघु लघ्वेव तेषु शिल्पस्थानेषु शिक्षा[4] निष्ठां गच्छति[5] ॥ प्रतिपक्षतोऽव्याकृतं कतमत् । यथापि[6] तत् प्रतिसंख्याय[7] भैषज्यं निषेवते ॥ उपशमतोऽव्याकृतं कतमत् । रूपारूप्यावचरः क्लेशः शमथोपगूढतामुपादाय ॥ [8] निष्यन्दतोऽव्याकृमतं कतमत् निर्वाणचित्तसहजम् ॥ अपि खलु निदर्शनतः(v) कुशलमप्यकुशलमप्यव्याकृतमपि द्रष्टव्यम् ॥ तत्पुनः कतमत् । यद्बुद्धाः परमपारमिप्राप्ताश्च बोधिसत्त्वा[1] निदर्शयन्ति सत्त्वानामनुग्रहार्थं न तु तेषां तत्र तथा काचित् परिनिष्पत्तिः । [ Ch. 8a ] कथं कामप्रतिसंयुक्तं कति का(म) प्रतिसंयुक्तानि किमर्थं कामप्रतिसंयुक्तपरीक्षा । अवीतरागस्य सास्रवकुशलाकुशलाव्याकृतं कामप्रति(vi) संयुक्तं द्रष्टव्यम् । चत्वारो धातवो द्वे चायतने तदन्येषां च स्कन्धधात्वायतनानामेकदेशः । कामावीतरागात्माभिनिवेशत्याजनार्थम् ॥ कथं रूपप्रतिसंयुक्तानि [ T. 69a ] किमर्थं रूपप्रतिसंयुक्तपरीक्षा । कामवीतरागस्य रूपावीतरागस्य कुशलाव्याकृतं रूपप्रतिसंयुक्तं द्रष्टव्यम् ॥ (vii) [ Ph. 1A8. Ms. 12a ] चतुरो धातून् द्वे चायतने स्थापयित्वा तदन्येषां स्कन्धधात्वायतनानामेक-

१. मू० धर्मै यत । भा. धर्मै यत । १a. ची० धर्मम् । २. ची० कुदृष्टि इत्यस्यस्थाने मनो मिथ्या० ३. ची० पुत्रादिषु । ४. ची शिक्षा नास्ति । ५. ची० अभ्यस्यति । ६. ची० रोगोपशमलाभमुद्दाय इत्यधिकम् भा व्याधिप्रतिपक्षेणारोग्यार्थम् ७. ची० भा प्रतिसंख्याय । मू० भो० अप्रतिसंख्याय ८. भा० अधिगमनिष्यन्दतः ।

१. ची० महासत्त्वा इत्यधिकम् ।

देशः । कामवीतरागात्माभिनिवेशत्याजनार्थम् ॥ कथमारूप्यप्रतिसंयुक्तं कत्यारूप्यप्रतिसंयुक्तानि किमर्थमारूप्यप्रतिसंयुक्तपरीक्षा । रूपवीतरागस्यारूप्यावीतरागस्य कुशलाव्याकृतं वाऽऽरूप्यप्रतिसंयुक्तं द्रष्टव्यम् । चतुर्णां स्कन्धानां द्वयो[ii] श्चायतनयोः प्रदेशः । रूपवीतरागात्माभिनिवेशत्याजनार्थम् ॥ वैराग्यं पुनरेकदेशवैराग्यं सकलवैराग्यं प्रतिवेधवैराग्यमुपघातवैराग्यं समुद्घातवैराग्यं च द्रष्टव्यम् । अपि खलु दश वैराग्याणि । प्रकृतिवैराग्यमुपघातवैराग्यमुपस्तम्भवैराग्यं समुत्कर्षवैराग्यं सम्मोहवैराग्यं प्रतिपक्षवैराग्यं परिज्ञावैराग्यं प्रहाणि[ii]वैराग्यं [ T. 69b ] सोत्तरवैराग्यं निरुत्तरवैराग्यम् ॥ प्रकृतिवैराग्यं कतमत् । दुःखायां वेदनायां दुःखस्थानीयेषु च धर्मेषु या प्रतिकूलता ॥ उपघातवैराग्यं कतमत् । मैथुनप्रयुक्तस्य दाहविगमे या प्रतिकूलता ॥ उपस्तम्भवैराग्यं कतमत् । सुभुक्तवतो मृष्टेऽपि भोजने या प्रतिकूलता ॥ समुत्कर्षवैराग्यं कतमत् । उच्चतरं स्थानं प्राप्तव[iii] तो निहीने[3] स्थाने या प्रतिकूलता ॥ सम्मोहवैराग्यं कतमत् । बालानां निर्वाणे या प्रतिकूलता ॥ प्रतिपक्ष वैराग्यं कतमत् । लौकिकेन वा लोकोत्तरेण वा मार्गेण यत्क्लेशप्रहाणम् ॥ परिज्ञावैराग्यं कतमत् । प्रतिलब्धदर्शनमार्गस्य त्रैधातुके या प्रतिकूलता ॥ प्रहाणिवैराग्यं कतमत् । भूमौ भूमौ क्लेशान् प्रजहतो या प्रति[iv] कूलता ॥ सोत्तरं वैराग्यं कतमत् । लौकिकानां श्रावकप्रत्येकबुद्धानां च यद्वैराग्यम् ॥ निरुत्तरं वैराग्यं कतमत् । यद् बुद्धबोधिसत्त्वानां वैराग्यं सर्वसत्त्वहितसुखाधिष्ठानता[1] मुपादाय ॥ कथं शैक्षं कति शैक्षाणि किमर्थं शैक्षपरीक्षा । मोक्ष[2] प्रयुक्तस्य कुशलं शैक्षं [ T. 70a ] द्रष्टव्यम् । स्कन्धानां दशानां धातूनां चतुर्णां चा[v]यतनानामेकदेशः । मोक्षप्रयुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथमशैक्षं कत्यशैक्षाणि किमर्थमशैक्षपरीक्षा । शिक्षायां निष्ठागतस्य कुशलमशैक्षं द्रष्टव्यम् । स्कन्धानां दशानां धातूनां चतुर्णां चायतनानां प्रदेशः । मुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथं नैवशैक्षानाशैक्षं कति नैवशैक्षानाशैक्षाणि[vi] किमर्थं नैवशैक्षानाशैक्षपरीक्षा । पृथग्जनस्य कुशलाकुशलाव्याकृतं शैक्षस्य क्लिष्टाव्याकृतमशैक्षस्य चाव्याकृतमसंस्कृतं च नैवशैक्षानाशैक्षं द्रष्टव्यम् । अष्टौ धातवोऽष्टा[1] वायतनानि तदन्येषां

---

२. ची. पूर्वोक्तान् इत्यधिकम् । मू० भा० चत्वारो । ३. भा० निहीनस्थाने ।

१. ची० सुखकामताम् २. ची० पर्येषिणः । ३. मू० नास्ति । टी० ची० भो० अस्ति ।

४. मू० अष्टादशोत्सपपाठः ।

४

स्कन्धधात्वायतनानां प्रदेशः । अमुक्तात्माभिनिवेशत्याजनार्थम् ॥ कथं दर्शनप्रहातव्यं कति[vii] [ Ph. 1B 8, Ms. 12b ] दर्शनप्रहातव्यानि किमर्थं दर्शनप्रहातव्यपरीक्षा । परिकल्पिता क्लिष्टा दृष्टिः विचिकित्सादृष्टिस्थानं ये च दृष्टौ विप्रतिपन्नाः क्लेशोपक्लेशाः [ Ch. 8b ] यच्च दृष्ट्या समुत्थापितं कायवा[5] कर्म सर्वं चापायिकं स्कन्धधात्वायतनं दर्शनप्रहातव्यं द्रष्टव्यम् । सर्वेषामेकदेशः । दर्शनसंपन्नात्माभिनिवेशत्याजनार्थम् ॥ कथं भावनाप्रहातव्यं [i] [ T. 70b ] कति भावनाप्रहातव्यानि किमर्थं भावनाप्रहातव्यपरीक्षा । लब्धदर्शनमार्गस्य तदूर्ध्वं दर्शनप्रहातव्यविपर्ययेण सास्रवा धर्माः । सर्वेषामेकदेशः । भावनासंपन्नात्माभिनिवेशत्यजनार्थम् ॥ कथमप्रहातव्यं कत्यप्रहातव्यानि किममर्थमप्रहातव्यपरीक्षा । अनास्रवमप्रहातव्यं द्रष्टव्यं स्थापयित्वा निर्वेधभागीयम् । स्कंधानां दशानां धा[ii]तूनां चतुर्णां चायतनानां प्रदेशः । सिद्धात्माभिनिवेशत्याजनार्थम् ॥ कथं प्रतीत्यसमुत्पन्नं कति प्रतीत्यसमुत्पन्नानि किमर्थं प्रतीत्यसमुत्पन्नपरीक्षा । लक्षणतोऽप्यङ्गविभागतोऽपि अङ्गसमासतोऽप्यङ्गप्रत्ययत्वव्यवस्थानतोऽपि अङ्गकर्मव्यवस्थानतोऽपि अङ्गसंक्लेशसंग्रहतोऽपि अर्थतोऽपि गाम्भीर्यतोऽपि प्रभेदतोऽप्यनुलो[iii]म ( प्रतिलोम[7] )तोऽपि प्रतीत्यसमुत्पन्नं द्रष्टव्यम् । सर्वाणि धर्मधात्वायतनैकदेशं स्थापयित्वा । अहेतुविषमहेतुकात्माभिनिवेशत्याजनार्थम् ॥ कथं लक्षणतः । निरी( ह )प्रत्ययोत्पत्तितामुपादाय अनित्यप्रत्ययोत्पत्तितामुपादाय समर्थप्रत्ययोत्पत्तितामुपादाय ॥ कथमङ्गविभागतः । द्वादशाङ्गानि । द्वादशाङ्गः प्रतीत्यसमुत्पादः अविद्या सं[iv]स्कारा विज्ञानं नामरूपं षडायतनं स्पर्शो [ T. 71a ] वेदना तृष्णोपदानं भवो जाति जरामरणं च ॥ कथमङ्गसमासतोऽपि । आक्षेपकाङ्गमाक्षिप्ताङ्गमभिनिर्वर्त्तकाङ्गमभिनिर्वृत्त्यङ्गं च ॥ आक्षेपकाङ्गं कतमत् । अविद्या संस्कारा विज्ञानं च ॥ आक्षिप्तकाङ्गं[1] कतमत् । नामरूपं षडायतनं स्पर्शो वेदना च ॥ अभिनिर्वर्त्तकाङ्गं कतमत् । तृष्णा उपादानं[v] भवश्च । अभिनिर्वृत्त्यङ्गं कतमत् । जाति जरामरणं च ॥ कथमङ्गप्रत्ययत्वव्यवस्थानतः । वासनातोऽप्यावेधतोऽपि मनसिकारतोऽपि सहभावतोऽप्यङ्गानां प्रत्ययत्वव्यवस्थानं वेदितव्यं तच्च यथायोगम् ॥ कथमङ्गकर्मव्यवस्थानतः । अविद्या किंकर्मिका[vi] । भवे च सत्त्वान् संमोहयति प्रत्ययश्च

---

५. चीο मन इत्यधिकम् ६. मू० एकदेशेनेति प्रमादः । ७. मू० प्रतिलोमेति च्युतम् । उत्तरत्र चीनानुवादे च शुद्धः पाठो लक्ष्यते । भो०अनुलोमतः प्रतिलोमतः । १. मा० आक्षिप्ताङ्गं ।

भवति संस्काराणाम् ॥ संस्काराः किंकर्मकाः(vi) गतिषु च सत्त्वान् विभजन्ति प्रत्ययाश्च भवन्ति विज्ञानवासनाया[2]: ॥ विज्ञानं किंकर्मकम् । सत्त्वानां कर्मबन्धं च धारयति प्रत्ययश्च भवति नामरूपस्य ॥ नामरूपं च किंकर्मकम् । आत्मभावं च सत्त्वान् ग्राहयति प्रत्ययश्च भवति षडायतनस्य ॥ षडायतनं किंकर्मकम् । आत्मभावपरिपूरिं च सत्त्वान् ग्राहयति प्रत्य(vii)[ Ph.1A.9Ms13a ]यश्च भवति स्पर्शस्य ॥ स्पर्शः किंकर्मकः । विषयोपभोगे च सत्त्वान् प्रवर्त्तयति [ T.71b ] प्रत्ययश्च भवति वेदनायाः ॥ वेदना किंकर्मिका । जन्मोपभोगे च सत्त्वान् प्रवर्त्तयति प्रत्ययश्च भवति तृष्णायाः ॥ तृष्णा किंकर्मिका । जन्मनि[3] च सत्त्वानाकर्षयति प्रत्ययश्च भवति उपादानस्य ॥ उपादानं किंकर्मकम् । पुनर्भवादानार्थं[4] सोपादानं च सत्त्वानां(1) विज्ञानं करोति प्रत्ययश्च भवति भवस्य ॥ भवः किंकर्मकः । पुनर्भवे च सत्त्वानभिमुखीकरोति प्रत्ययश्च भवति जातेः ॥ जातिः किंकर्मिका । नामरूपषडायतनस्पर्शवेदनानुपूर्व्या च सत्त्वानभिनिर्वर्त्तयति प्रत्ययश्च भवति जरामरणस्य ॥ जरामरणं किंकर्मकम् । पुनः पुनर्वयःपरिणामेन जीवितपरिणामेन च सत्त्वान्योजयति ॥ [ Ch. 9a ] कथमङ्गसंक्ले(ii)शसंग्रहतः । या चाविद्या या च तृष्णा यच्चोपादानमित्ययं संक्लेशसंग्रहः । ये च संस्कारा यच्च विज्ञानं यश्च भव इत्ययं कर्मसंक्लेशसंग्रहः । शेषाणि जन्मसंक्लेशसंग्रहः ॥ कथमर्थतः । निःकर्तृकार्थः प्रतीत्यसमुत्पादार्थः । सहेतुकार्थः निःसत्त्वार्थः परतंत्रार्थः निरीहकार्थः अनित्यार्थः क्षणिकार्थः हेतुफलप्रबन्धानुपच्छेदार्थः (iii) अनुरूपहेतुफलार्थः[1] विचित्रहेतुफलार्थः प्रतिनियतहेतुफलार्थश्च प्रतीत्यसमुत्पादार्थः[2] ॥ कथं गाम्भीर्यतः । हेतु [ T 72a ] गाम्भीर्यतोऽपि लक्षणगाम्भीर्यतोऽपि उत्पत्तिगाम्भीर्यतोऽपि स्थितिगाम्भीर्यतोऽपि[3] वृत्तिगाम्भीर्यतोऽपि गाम्भीर्यं द्रष्टव्यम् ॥ अपि खलु क्षणिकः प्रतीत्यसमुत्पादः स्थितितश्चोपलभ्यते । निरीहकप्रत्ययः प्रतीत्यसमुत्पादः समर्थप्रत्यय(iv)श्चोपलभ्यते । निःसत्त्वः प्रतीत्यसमुत्पादः सत्त्वतश्चोपलभ्यते । न स्वतो न परतो न द्वाभ्यां न स्वयंकारापर(र)कारहेतुसमुत्पन्नः[4] । अतोऽपि गम्भीरः ॥ कथं

---

१1. ची. अत्रोत्तरत्र च द्विकर्मिका इति । २. मो० विज्ञानस्य वासनायाः । ३. ची० मरणे इत्यधिकम् । ४. मू० न स्पष्टम् । र्थं इति यत्न प्रतीयते । मो० एतादृशः पाठः प्रतीयते । भाष्ये पुनर्भवोपादानात् यत् सोपादानं तन् सत्त्वानामिति व्याख्यानम् । ची० आवेध ( Fa ) इत्यधिकः प्रतीयते । १. टी० ची० फलपरिग्रहार्थः । २. मू० अर्थः नास्ति । ची० मो० उत्तरत्र चास्ति । ३. टी. प्रवृत्ति । ४. टी० ची० नास्वयंकारापरकारहेतुसमुत्पन्नः । अत्रापरस्तु परार्थकः ।

प्रभेदतः। विज्ञानोत्पत्तिप्रभेदतः च्युत्युपपत्तिप्रभेदतः बाह्यशस्योत्पत्तिप्रभेदतः संवर्त्तविवर्त्तप्रभे(v)दतः आहारोपस्तम्भप्रभेदतः इष्टानिष्टगतिविभागप्रभेदतः विशुद्धिप्रभेदतः प्रभावप्रभेदतश्च प्रभेदो द्रष्टव्यः॥ कथमनुलोमप्रतिलोमतः। संक्लेशा[5] नुलोमप्रतिलोमतोऽपि व्यवदानानुलोमप्रतिलोमतोऽपि प्रतीत्यसमुत्पादस्यानुलोमप्रतिलोमनिर्देशो द्रष्टव्यः॥

( अथ मूलवस्तुनि त्रिधर्मपरिच्छेदे प्रथमे तृतीयो भागः )[6]

कथं प्रत्ययः कति प्रत्ययाः किमर्थं प्रत्ययपरीक्षा(vi)। हेतुतोऽपि समनन्तरतोऽपि आलम्बनतोऽप्यधिपतितोऽपि प्रत्ययो द्रष्टव्यः। सर्वाणि प्रत्ययः। आत्महेतुकधर्माभिनिवेशत्याजना [ T. 72b ]र्थम्॥ हेतुप्रत्ययः कतमः। आलयविज्ञानं कुशलवासना च॥ अपि खलु स्वभावतोऽपि प्रभेदतोऽपि सहायतोऽपि संप्रतिपत्तितोऽपि परिपन्थतोऽपि परिग्रहतोऽपि हेतुप्रत्ययो(vii) [ Ph. 1B2. Ms. 13b ] द्रष्टव्यः॥ कथं स्वभावतः। कारणं हेतुस्वभावतः॥ कथं प्रभेदतः[7]। उत्पत्तिकारणं तद्यथा चक्षुः[8] सामग्री विज्ञानस्य॥ स्थितिकारणं तद्यथा आहारो भूतानां सत्त्वानां संभवैषिणां च॥ धृतिकारणं तद्यथा पृथिवी सत्त्वानाम्॥ प्रकाशकारणं तद्यथा प्रदीपो रूपाणाम्॥ विकारकारणं तद्यथा अग्निरिन्धनस्य॥ वियोगकारणं तद्यथा दात्रं छेद्यस्य॥ परिणतिकार(i)णं तद्यथा शिल्पस्थाना[9]दिकं हिरण्यादीनाम्॥ संप्रत्ययकारणं तद्यथा धूमोऽग्नेः। संप्रत्यायनकारणं तद्यथा प्रतिज्ञाहेतुदृष्टान्ताः साध्यस्य॥ प्रापणकारणं तद्यथा मार्गो निर्वाणस्य॥ व्यवहारकारणं [ Ch. 9b ] तद्यथा नाम संज्ञा दृष्टिश्च॥ अपेक्षाकारणं यदपेक्ष्य यत्रार्थित्वमुत्पद्यते। तद्यथा जिघत्सामपेक्ष्य भोजने॥ आक्षेपकारणं विदूरः(ii) प्रत्ययः। तद्यथा अविद्या जरामरणस्य॥ अभिनिर्वृत्तिकारणमासन्नः प्रत्ययः। तद्यथा अविद्या संस्काराणाम्॥ परिग्रहकारणं तदन्यः प्रत्ययः। तद्यथा क्षेत्रोदकपास्या ( ? वाप्या ) दिकं सस्योदयस्य॥ आवाहककारणमनुकूलतः प्रत्ययः। तद्यथा सम्यग्राजासेवा राजाराधनायाः॥ प्रति[ T. 73a ] नियमकारणं प्रत्ययवैचित्र्यम्। तद्यथा पञ्चगतिप्रत्ययाः प(iii)ञ्चानां गतीनाम्॥ सहकारिकारणं प्रत्ययसामग्री। तद्यथा विज्ञानस्य इन्द्रियमपरिभिन्नं विषय आभासगतः तज्जश्च मनस्कारः प्रत्युप-

५. टी० क्लेशा०। ६. मूले नास्ति। ची. अस्ति। ७. ची० कारणं हेतुप्रभेदतः। संक्षेपतो शतिविधविंम् इत्यधिकम्॥ ८. ची० मो० विज्ञान०। ९. ची० ज्ञाना०।

स्थितः ॥ विरोधि[1] कारणमन्तरायः[2]। तद्यथा सस्यस्याशनिः ॥ अविरोध-
कारणम (न)न्तरायः[3]। तद्यथा तस्यैवान्तरायस्याभावः ॥ कथं सहायतः।
ये धर्माः सहभावेनोत्पद्यन्ते नान्यतमवैकल्येन। तद्(ii)था भूतानि भौतिकञ्च ॥
कथं संप्रतिपत्तितः। ये धर्माः स(ह)भावेनालम्बनं संप्रतिपद्यन्ते नान्यतमवैकल्येन।
तद्यथा चित्तं चैतसिकाश्च ॥ कथं पुष्टितः। पूर्वभावितानां कुशलाकुशलाव्याकृतानां
धर्माणां या अपरान्ते उत्तरोत्तरा पुष्टतरा पुष्टतमा[4] प्रवृत्तिः ॥ कथं परिपन्थतः।
या क्लेशानामन्यतमभावनयाऽन्यतमप्रबन्धपुष्टिहृडीकारः। नि(v)र्वाणसन्तानदूरी-
करणाय ॥ कथं परिग्रहतः। अकुशलाः कुशलसास्रवाश्च धर्माः। आत्मभावपरि-
ग्रहाय ॥ कथं समनन्तरतः। नैरन्तर्यसमनन्तरतोऽपि सभागविसभागचित्तचैतो-
त्पत्तिसमनन्तरतोऽपि, समनन्तरप्रत्ययो द्रष्टव्यः ॥ कथमालम्बनतः। परिच्छिन्न-
विषयालम्बनतोऽपि अपरिच्छिन्नविषयालम्बनतोऽपि [T. 73b] अचित्रीकार-
विषया(vi)लम्बनतोऽपि (सचित्रीकारविषयालम्बनतोऽपि[5]) सवस्तुकविषयालम्बन-
तोऽपि अवस्तुकविषयालम्बनतोऽपि वस्त्वालम्बनतोऽपि परिकल्पालम्बनतोऽपि
विपर्यस्तालम्बनतोऽपि अविपर्यस्तालम्बतोपि सव्याघातालम्बनतोऽपि अव्याघाता-
लम्बनतोऽपि आलम्बनप्रत्ययो द्रष्टव्यः ॥ कथमधिपतितः। प्रतिष्ठाधिपतितोऽप्यावेधा-
धिपतितोऽपि सहभावाधिप(vii) [Ph 2a1. Ms. 14a] तितोऽपि विषयाधिपतितोऽपि
प्रसवाधिपतितोऽपि स्थानाधिपतितोऽपि फलोपभोगाधिपतितोऽपि लौकिकविशुद्ध्य[1]-
धिपतितोऽपि लोकोत्तरविशुद्ध्य[2] धिपतितोऽपि अधिपति प्रत्ययो द्रष्टव्यः ॥

कथं सभागतत्सभागं कति सभागतत्सभागानि किमर्थं सभागतत्सभाग-
परीक्षा। विज्ञानाविरहिततत्साद्दृश्येन्द्रियविषयप्रबन्धोत्पत्तितोऽपि(i) विज्ञानविर-
हिततत्साद्दृश्यप्रबन्धोत्पत्तितोऽपि सभागतत्सभागं द्रष्टव्यम्। रूपस्कन्धैकदेशः[3]
पञ्चरूपीणि धात्वायतनानि। विज्ञानयुक्तायुक्तात्माभिनिवेशत्याजनार्थम् ॥
कथमुपात्तं कत्युपात्तानि किमर्थमुपात्तपरीक्षा। वेदनोत्पत्त्याश्रय(रूप)[4]त
उपात्तं द्रष्टव्यम्। रूपस्कन्धैकदेशः पञ्च रूपीणि धात्वायतनानि चतुर्णां चैकदेशः।

१. भा० विरोध०। २, ३. वी० प्रत्यय इत्यधिकम्। ४. भा पुष्टतरतमा। ५ वी० भो
अस्ति। मूले पाठः पतितः प्रतीयते।
१, २. मू० द्वया०। ३. वी० चतुराशीति इत्यधिकम्। ४. वी० एकदेश। ५. मू० नास्ति
भा० वी० मो० अस्ति।

देहवशवर्त्या[iii] त्माभिनिवेशत्याजनार्थम् ॥ कथमिन्द्रियं कतीन्द्रियाणि किमर्थमिन्द्रियपरीक्षा। [T.74a] विषयग्रहणाधिपतितोऽपि कुशलप्रबन्धाधिपतितोऽपि निकायसभागस्थानाधिपतितोऽपि शुभाशुभकर्मफलभोगाधिपतितोऽपि लौकिकवैराग्याधिपतितोऽपि लोकोत्तरवैराग्याधिपतितोऽपि इन्द्रियं द्रष्टव्यम्। वेदनास्कन्धो विज्ञानस्कन्धः[iii] रूपसंस्कारस्कन्धैकदेशः द्वादश धातवः षडायतनानि धर्मधात्वायतनैकदेशश्च। आत्माधिपत्यभिनिवेशत्याजनार्थम् ॥ [Ch. 10a] कथं दुःखदुःखता कति दुःखदुःखतानि किमर्थं दुःखदुःखतापरीक्षा। दुःखवेदनास्वलक्षणतोऽपि दुःखवेदनीयधर्मस्वलक्षणतोऽपि दुःखदुःखता द्रष्टव्या। सर्वेषामेकदेशः। दुःखितात्माभिनिवेशत्याज[iv] नार्थम् ॥ कथं विपरिणामदुःखता कति विपरिणामदुःखतानि किमर्थं विपरिणामदुःखतापरीक्षा। सुखवेदनाविपरिणतिस्वलक्षणतोऽपि सुखवेदनीयधर्मविपरिणतिस्वलक्षणतोऽपि तत्र चानुनयचित्तविपरिणतितोऽपि विपरिणामदुःखता द्रष्टव्या। सर्वेषामेकदेशः। सुखितात्माभिनिवेशत्याजनार्थम्[v] ॥ कथं संस्कारदुःखता कति संस्कारदुःखतानि किमर्थं संस्कारदुःखतापरीक्षा। अदुःखासुखवेदना स्वलक्षणतोऽपि अदुःखासुख [T. 71b] वेदनीयस्वधर्मलक्षणतोऽपि तदुभयदौष्ठुल्यपरिग्रहतोऽपि द्वयाविनिर्मोक्षानित्यानुबन्धायोगक्षेमतोऽपि संस्कारदुःखता द्रष्टव्या। स्कन्धानां त्रयाणां धातूनां द्वयोश्चायतनयोरेकदेशं[vi] स्थापयित्वा सर्वाणि। अदुःखासुखात्माभिनिवेशत्याजनार्थम् ॥ कथं सविपाकं कति सविपाकानि किमर्थं सविपाकपरीक्षा। अकुशलं कुशलसास्रवं च सविपाकं द्रष्टव्यम्। स्कन्धानां दशानां धातूनां चतुर्णां चायतनानामेकदेशः। स्कन्धोपनिक्षेपकप्रतिसंधायकात्माभिनिवेशत्याजनार्थम्[vii] ॥ [Ph.2B 1,Ms.14b] विपाकः पुनरालयविज्ञानं ससंप्रयोगं द्रष्टव्यम्। तदन्यत्तु विपाकजम्[1] ॥ कथमाहारः कत्याहाराः किमर्थमाहारपरीक्षा। परिणतितोऽपि पारिणामिकः विषयतोऽपि वैषयिकः आशयतो ऽप्याशि (? शयि) कः[2] उपादानतोऽप्युपादानिकः आहारो द्रष्टव्यः। त्रयाणां स्कन्धानामेकादशानां धातूनां पञ्चानाञ्चायतनानामेकदेशः। आहारस्थितिकात्माभिनिवेशत्यजनार्थम् ॥ (i) अपि खल्वाहारो[3] ऽशुद्धा[3] श्रयस्थितिकः[4] शुद्धाशुद्धाश्रयस्थितिकः शुद्धाश्रयस्थितिकः स्थितिसांदर्शिनकश्च द्रष्टव्यः॥ कथं सोत्तरं

१. ची० अविपाकः इत्यधिकम्। २. भा० भो० आशात आशिक इति। ३. ची० व्यवस्थानप्रभेदेन समासतश्चतुर्विध इत्यधिकम्। ४. मू० अशुद्धा०।

कति सोत्तराणि किमर्थं सोत्तरपरीक्षा। संस्कृततोऽसंस्कृते [ T. 75a ] कदेशतश्च सोत्तरं द्रष्टव्यम्। धर्मधात्वायतनैकदेशं स्थापयित्वा सर्वाणि। आत्मद्रव्यदृष्टीनाभिनिवेशत्याजनार्थम्॥ कथमनुत्तरं कत्यनुत्तराणि किमर्थमनुत्तर(ii) परीक्षा। असंस्कृतैकदेशतोऽनुत्तरं द्रष्टव्यम्। धर्मधात्वायतनैकदेशः। आत्मद्रव्याग्राभिनिवेशत्याजनार्थम्॥ इत्यनेन[5] नयेनाप्रमाणः प्रभेदनयः॥

अपि खलु समासतः स्कन्धधात्वायतनानां प्रभेदस्त्रिविधः। परिकल्पितलक्षणप्रभेदः विकल्पितलक्षणप्रभेदः धर्मतालक्षणप्रभेदश्च॥ तत्र परिकल्पितलक्षणप्रभेदः(iii) कतमः। स्कन्धधात्वायतनेष्वात्मेति वा सत्त्वो जीवो जन्तुः पोषो पुद्गलो मनुजो[6] मानव इति वा यत्परिकल्प्यते॥ विकल्पितलक्षणप्रभेदः कतमः। तान्येव स्कन्धधात्वायतनानि॥ धर्मतालक्षणप्रभेदः कतमः। तेष्वेव स्कन्धधात्वायतनेष्वात्माऽभावः सत्त्वजीवजन्तुपोषपुद्गलमनुजमानवानामभावः नैरात्म्यास्तिता॥

अपि खलु चतु(iv) र्विधः प्रभेदः। लक्षणप्रभेदः प्रकारप्रभेदः आश्रयप्रभेदः सन्ततिप्रभेदश्च॥ लक्षणप्रभेदः कतमः। प्रत्येकं स्कन्धधात्वायतनानां स्वलक्षणप्र- [ T. 75b ]भेदः॥ प्रकारप्रभेदः। तेषामेवस्कन्धधात्वायतनानां द्रव्यमन्तः प्रज्ञप्तिमन्तः संवृतिमन्तः परमार्थमन्तः रूपिणोऽरूपिणः सनिदर्शना अनिदर्शना (v)इत्येवमादि[1] यथानिर्दिष्टः॥ आश्रयप्रभेदः कतमः। यावन्तः सत्त्वाश्रया[2] स्तावन्ति स्कन्ध[ Ch 10b ] धात्वायतनानि॥ सन्ततिप्रभेदः कतमः। प्रतिक्षणं स्कन्धधात्वायतनानां प्रवृत्तिः॥ लक्षणप्रभेदे कुशलः किं परिजानाति। आत्माभिनिवेशं परिजानाति॥ प्रकारप्रभेदे कुशलः किं परिजानाति। पिण्डसंज्ञां परिजानाति॥ आश्रयप्रभेदे कुशलः (vi) किं परिजानाति। अकृताभ्यागमकृतविप्रणाशसंज्ञां परिजानाति॥ सन्ततिप्रभेदे कुशलः किं परिजाति। स्थिरसंज्ञां परिजानाति॥

अपि खलु षड्विधः प्रभेदः एषामेव स्कन्धधात्वायतनानाम्। बहिर्मुखप्रभेदः अन्तर्मुखप्रभेदः आयत[3] कालभेदः परिच्छिन्नकालप्रभेदः तत्कालप्रभेदः संदर्शनप्रभेदश्च। बहिर्मु(vii)खप्रभेदः कतमः। यद्भूयसा कामावचरप्रभेदः॥ अन्तर्मुखप्रभेदःकतमः। सर्वाः सामाधिभूमयः॥ आयतकालप्रभेदः कतमः। [ T. 76a ] पृथग्जनानाम्॥ परिच्छिन्नकालप्रभेदः कतमः। शैक्षाणां स्थापयित्वा चरमक्षणे स्कन्धधात्वायतनानि

५. ची० प्रभेदनयेन। ६. ची० मनोज इत्यर्थकः।

तदन्यानि[1] अशैक्षाणाम् ॥ तत्कालप्रभेदः कतमः। अशैक्षाणां चरमक्षणे स्कन्धधात्वायतनानि ॥ संदर्शनप्रभेदः कतमः। बुद्धानां पारमिप्राप्तानां बोधिसत्त्वानां महासत्त्वानां[1] च सनिदर्शनानि स्कन्धधात्वायतनानि। ० ॥

( अथ महायानाभिधर्मसमुच्चयशास्त्रे मूलवस्तुनि संग्रहपरिच्छेदो द्वितीयः [8] )

संग्रहः कतमः। संग्रह[1] एकादशविधो द्रष्टव्यः। लक्षणसंग्रहः धातुसंग्रहः जातिसंग्रहः अवस्थासंग्रहः सहायसंग्रहः देशसंग्रहः कालसंग्रहः एकदेशसंग्रहः सकलसंग्रहः इतरेतरसंग्रहः परमार्थसंग्रहश्च ॥ लक्षणसंग्रहः कतमः। स्कन्धधात्वायतनानां प्रत्येकं स्वलक्षणेनैव तत्तत्संग्रहः॥ धातुसंग्रहः कतमः। स्कन्धधात्वायतनानां बीजभूतेनालयविज्ञानेन तत्तद्धातुसंग्रहः ॥ जातिसंग्रहः कतमः। स्कन्धधात्वायतनानां विलक्षणानामपि स्कन्धधात्वायतनैरन्योऽन्यसंग्रहः ॥ अवस्थासंग्रहः कतमः। सुखावस्थानां स्कन्धधात्वायतनानां स्वलक्षणेन[5] संग्रहः। दुःखावस्थानामदुःखासुखावस्थानामपि। अवस्थामुपादाय[6] ॥ सहाय [ T.76b ] संग्रहः कतमः। रूपस्कन्धः तदन्यैःस्कन्धैरन्योऽन्यं[7] सहायतः[8] सहायैः संगृहीतः। एवं तदन्ये स्कन्धा धातवः आयतनानि च[9]। देशसंग्रहः कतमः। पूर्वदिगाश्रितानां स्कन्धधात्वायतनानां स्वलक्षणेन[10] संग्रहः। एवं तदन्यदिशामपि स्कन्धधात्वायतनानां[11] वेदितव्यम् ॥ कालसंग्रहः कतमः। अतीतानां स्कन्धधात्वायतनानां स्वलक्षणेन संग्रहः। अनागतानां प्रत्युत्पन्नानामपि स्कन्धधात्वायतनानाम्[12]। एकदेशसंग्रहः कतमः। यावन्तो धर्माः स्कन्धधात्वायतनैः संगृहीताः तेषामन्यतमसंग्रह एकदेश संग्रहो वेदितव्यः ॥ सकलसंग्रहः कतमः। यावन्तो धर्माः स्कन्धधात्वायतनैः संगृहीताः तेषामशेषतः संग्रहः सकलसंग्रहो वेदितव्यः ॥ इतरेतरसंग्रहः कतमः। रूपस्कन्धसंग्रहे कति धातवः कत्यायतनानि। दशानामेकदेशः[1]। वेदनास्कन्धसंग्रहे कति धातवः कत्यायतनानि। एकदेशः[2]। यथा वेदनास्कन्धस्तथासंज्ञासंस्कार स्कन्धौ ॥ विज्ञानस्कन्धसंग्रहे कति धातवः कत्यायतनानि। सप्त धातव एकमायतनम् ॥ चक्षुर्धातुसंग्रहे कति स्कन्धः कत्यायतनानि। रूपस्कन्धैकदेश-

१. भो० नास्ति। २. भो० नास्ति। चीनेऽधिकं युज्यते। ३. ची० एतदधिकम्। भो० नास्ति ४. भो० नास्ति। ५. भो० तत्त्वेन। ६. भो० एतद् नास्ति। ७. भो० अन्योऽन्यं नास्ति। ८. भो० सहायभावेन। ९. भो० वेदितव्यानि। १०. भो० तत्त्वेन। ११. १२. भो० स्कन्धधात्वायतनानां नास्ति।

[ T.77a ] एकमायतनम् ॥ चक्षुर्धातुवत् श्रोत्रघ्राणजिह्वाकाय[3] रूपशब्दगन्धरसस्प्रष्टव्यधातवः ॥ [4] मनोधातुसंग्रहे कति स्कन्धाः कत्यायतनानि । एकः स्कन्ध एकमायतनम् [4] ॥ [5] धर्मधातुसंग्रहे कति स्कन्धाः कत्यायतनानि । त्रयः स्कन्धा रूपस्कन्धैकदेश एकमायतनम् [5] ॥ चक्षुर्विज्ञानधातुसंग्रहे कति स्कन्धाः कत्यायतनानि विज्ञानस्कन्धमनआयतनयोरेकदेशः । चक्षुर्विज्ञानवत् श्रोत्रघ्राणजिह्वाकायमनोविज्ञानधातवः ॥ चक्षुरायतनसंग्रहे कति स्कन्धाः कति धातवः । रूपस्कन्धैकदेश एको धातुश्च । यथा चक्षुरायतनं तथा श्रोत्रघ्राणजिह्वाकायरूपशब्दगन्धरसस्प्रष्टव्यायतनानि ॥ मनआयतनसंग्रहे कति स्कन्धाः कति धातवः । एकः स्कन्धः सप्त धातवः । धर्मायतनसंग्रहे कतिस्कन्धाः कति धातवः । त्रयाणां स्कन्धाना[ Ch.11a ] मेकदेश एको धातुश्च ॥ तद्वत् तदन्ये धर्माः स्कन्धधात्वायतनैर्निर्दिश्यन्ते अन्ये[3] च न स्कन्धधात्वायतनैर्निर्दिश्यन्ते । यथा द्रव्यमन्तः प्रज्ञप्तिमन्तः संवृतिमन्तः परमार्थमन्तो [ T.77b ] ज्ञेया विज्ञेया अभिज्ञेया रूपिणोऽरूपिणः सनिदर्शना अनिदर्शना इत्येवमादयः पूर्वं निर्दिष्टाः । (तेषां) यथायोगं स्कन्धधात्वायतनैरितरेतरसंग्रहो वेदितव्यः ॥ परमार्थसंग्रहः कतमः । स्कन्धधात्वायतनानां तथतासंग्रहकुशलः कमनुशंसं प्रतिलभते । [7] आलम्बनेऽभिसंक्षेपानुशंसं प्रतिलभते [7] । यथा यथा आलम्बनेषु चित्ता-[8]भिसंक्षेपः तथा तथा कुशलमूलाभिवृद्धिः ॥०॥

(अ[1] थ महायानाभिधर्मसमुच्चयशास्त्रे मूलवस्तूनि संप्रयोगपरिच्छेदस्तृतीयः ।) [1]

संप्रयोगः कतमः । समासतः संप्रयोगः षड्विधः । अविनिर्भाग संप्रयोगः मिश्रीभाव संप्रयोगः समवधानसंप्रयोगः सहभावसंप्रयोगः कृत्यानुष्ठानसंप्रयोगः संप्रतिपत्तिसंप्रयोगश्च ॥ अविनिर्भागसंप्रयोगः कतमः । सर्वेषां देशिनां परमाणुपर्यापन्नानां [2] रूपांशिकानामन्योन्यमविनिर्भागः[3] ॥ मिश्रीभावसंप्रयोगः कतमः ।

---

१. भो. दशानां धातूनां दशानां चायतनानामेकदेशः । २. भो० धात्वायतनानामेकदेशः । ३. भो० ०कायधातवः ॥ रूपधातुसंग्रहे कति स्कन्धाः कत्यायतनानि । रूपस्कन्धैकदेश एकमायतनम् ॥ रूपधातुवत् शब्दगन्धरसस्प्रष्टव्यधातवः ॥ ४. भो० मनोधातुसंग्रहे . . . एकमायतनम् । नास्ति । ५. भो० धर्मधातु संग्रहे . . . एकमायतनम् । इत्येतत्तु ०मनोविज्ञानधातव इत्यस्यानन्तरं वर्त्तते । ६. भो० केचित् । ७. भो० एतद् वाक्यं नास्ति । ८. भो० चित्तं नास्ति ।

१. मू० भो० एतद् वाक्यं नास्ति । २ . . २, ३ . . .

परमाणोरूर्ध्वं सर्वेषां देशिनां[8] रूपांशिकानां परस्परं मिश्रीभाव[3]: ॥ समवधानसंप्रयोगः कतमः। देशिनामेव समुदायिनां[1] रूपपरंपरायां समवधानम्[4] ॥ सहभावसंप्रयोगः कतमः। एकस्मिन् काये स्कन्धधात्वायतनानां सहकालप्रवृत्तिः समुत्पत्ति[5] स्थितिनिरोधाः ॥ कृत्यानुष्ठानसंप्रयोगः कतमः। एकस्मिन्[6] कृत्यानुष्ठाने परस्परं संप्रयोगः। यथा द्वयोर्भिक्ष्वोरन्यतरभिक्षोः क्रियानुष्ठाने अन्योऽन्यं संप्रयोगः ॥ संप्रतिपत्ति संप्रयोगः कतमः। [ T.78a ] चित्तचैतसिकानामेकस्मिन्नालम्बनेऽन्योन्यं[7] संप्रतिपत्तिः। स संप्रतिपत्तिसंप्रयोगः पुनरनेकार्थकः। यथा परभावेन संप्रयोगः[9] न स्वभावेन। अविरुद्धयोः संप्रयोगो[9] न विरुद्धयोः। सदृशकालयोः संप्रयोगो[9] अविसदृशकालयोः [ Ph.2A2MS.16a ] समागधातुभूमिकयो[9] रविसभाग( धातु )[10] भूमिकयोः ॥ सर्वत्रगसंप्रयोगस्तद्यथा वेदना संज्ञाचेतनास्पर्शमनस्कार विज्ञानानाम् ॥ अपि खलु क्लिष्टसर्वत्रगः संप्रयोगो[11] मनसि चतुर्णां क्लेशानाम् ॥ कादाचित्कः संप्रयोगस्तद्यथा चित्ते[12] श्रद्धादीनां कुशलानां रागादीनां च क्लेशोपक्लेशानाम् ॥ आवस्थिकः संप्रयोगः सुखाया वेदनायाः ससंप्रयोगा[1] याः। एवं दुःखाया अदुःखासुखायाः ॥ अविच्छिन्नः संप्रयोगः सचित्तिकायामवस्थायाम्। विच्छिन्नः संप्रयोगोऽचित्तकसमापत्त्यन्तरितस्य ॥ बहिर्मुखः संप्रयोगः यद्भूयसा काम[15] प्रतिसंयुक्तानां चित्तचैतसिकानाम् ॥ अन्तर्मुखः संप्रयोगो यद्भूयसा समाहितभूमिकानां चित्तचैतसिकानाम् ॥ उचितः संप्रयोगः पार्थग्ज[1] निकानां चित्तचैतसिकानां तदेकत्यानां[ T.78b ] च शैक्षाशैक्षाणाम्[1] ॥ अनुचितः संप्रयोगः लोकोत्तराणां चित्तचैतसिकानामाद्यतदुत्तराणां लोकोत्तरपृष्ठलब्धानां च ॥ संप्रयोगकुशलः कमनुशंसं प्रतिलभते। चित्तमात्रे वेदनादीनां सांक्लेशिकानां व्यावदानिकानाञ्च धर्माणां संप्रयोगं जानाति। तच्च जानना[iii] त्मा वेदयते संजानाति चेतयते स्मरति संक्लिश्यते व्यवदायते चेतयत्य[2] भिनिवेशं प्रजहाति [4] नै[1] रात्म्यमवतरति ॥

---

२, ३, भो० नास्ति। भाष्ये रूपादीनामिति वर्त्तते। ४, भो० नास्ति। ५, भो० एकोत्पत्ति। ६, भो० नास्ति। ७, भो० नास्ति ८, मूले नामीदिति प्रतीयते। ची० अधिकं प्रतीयते। ९, ची० संप्रयोग इत्यधिकं युक्तम्। १० भा० ची० भो० अस्ति। ११, ची० क्लिष्टे मनसि। १२, ची० तत्कालिकानाम् इत्यधिकम्। १३, भो० सचित्तकायायाम्। १४, ची० सविच्छिन्नाः। १५, ची० कामधातु०

१, ची० शैक्षाणाम्। २, ची० भो चेतयति नास्ति। चेतयतीति किम्। ३, ची० प्रजाहातीति वेदयते इत्यस्मात् पूर्वं वर्त्तते। ४, ची० कुशलमाशु इत्यधिकम्।

( अथाभिधर्मसमुच्चयशास्त्रे मूलवस्तुनि समन्वागमपरिच्छेदश्चतुर्थः )[5]

समन्वागमः कतमः। लक्षणतः पूर्ववत् ॥ तत्प्रभेदः पुनः त्रिविधः[6]। बीजसमन्वागमः वशितासमन्वागमः समुदाचारसमन्वागमश्च ॥ बीजसमन्वागमः कतमः। कामधातौ जातो भूतः कामप्रति(iv) संयुक्तैः[7] क्लेशोपक्लेशैः रूपारूप्यप्रतिसंयुक्तैश्च क्लेशोपक्लेशैर्बीजसमन्वागमेन समन्वागतः उपपत्तिप्रातिलाभिकै[8]श्च ॥ कुशलैः ॥ रूपधातौ जातो भूतः कामप्रतिसंयुक्तैः क्लेशोपक्लेशैः [ Ch. 11b ] बीजसमन्वागमेन समन्वागतोऽसमन्वागतश्च वक्तव्यः। रूपप्रतिसंयुक्तैरारूप्यप्रतिसंयुक्तैश्च क्लेशोपक्ले(v)शैः बीजसमन्वागमेन समन्वागतोऽसमन्वागतश्च [ T. 79a ] वक्तव्यः। आरूप्यप्रतिसं(यु)क्तैः क्लेशोपक्लेशैः बीजसमन्वागमेन समन्वागतः उपपत्ति(प्राति)लाभिकैश्च कुशलैः ॥त्रैधातु(vi) कप्रतिपक्ष[9] लाभी यस्य यस्य प्रकारस्य प्रतिपक्ष उत्पन्नस्तस्य [10] बीजसमन्वागमेनासमन्वागतः। यस्य[11]प्रतिपक्षो नोत्पन्नस्तस्य[12] बीजसमन्वागमेन समन्वागतः ॥ वशितासमन्वागमः कतमः। प्रायोगिकानां धर्माणां वशितासमन्वागमेन समन्वागतः लौकिकानां लोकोत्तराणां वा ध्यानविमोक्षस(vii) [ Ph. 2B2 Ms. 16b ] माधिसमापत्त्यादीनां[1] तदेकत्याजां (वा[2] )व्याकृतानाम्[3] ॥ समुदाचारसमन्वागमः कतमः। स्कन्धधात्वायतनानां यो य एव धर्मः संमुखीभूतः कुशलो वा अकुशलो वा अव्याकृतो वा तस्य समुदाचारसमन्वागमेन समन्वागतः ॥ समुच्छिन्नकुशलमूलः कुशलानां धर्माणां बीजसमन्वागमेन समन्वागतोऽसमन्वागतश्च वक्तव्यः ॥ आत्यन्तिकः पुनः(i)संक्लेशसमन्वागमः अपरिनिर्वाणधर्मकाणामिच्छन्तिकानां द्रष्टव्यः। मोक्षहेतुवैकल्यादात्यन्तिक एषां [4] हेत्वसमन्वागमः ॥ समन्वागमकुशलः कमनुशंसं प्रतिलभते। आचयापचयज्ञो भवति धर्माणाम्। तथा आचयापचयज्ञो न कस्यां चिल्लौकिक्यां सपत्तौ विपत्तौ वा एकान्तिकसंज्ञी भवति यावद्देवानुनयप्रतिघप्र(ii)हाणाय ॥

[5] अभिधर्मसमुच्चये लक्षणसमुच्चयो नाम प्रथमः समुच्चयः ॥[5]

---

५. मू० भो० नास्ति चीनानुवादेऽधिकं प्रतीयते। ६. भो० नास्ति। ७. ची० कामरूपारूप्य प्रतिसंयुक्तैः। ८. ची० प्रतिलम्भिकैः मू० प्राति० पतितं नीचे लिखितम्। अत उत्तरत्र योजितम्। ९. ची० प्रतिपक्षमार्ग०। १०. भो तस्य तस्य। ची० तस्य तस्य प्रकारस्य। ११. ची० यस्य यस्य प्रकारस्य। १२. ची० तस्य तस्य प्रकारस्य।

१. ची० गुणानाम्। २. मा० ची० भो० अस्ति। मू० नास्ति। ३. ची० धर्माणाम्। भो० वशितासमन्वागमेन समन्वागतः इत्यधिकम्। ४. ची० मोक्षलाभानां। ५. . . ५. ची० एतन्नास्ति

[ अभिधर्मसमुच्चयशास्त्रे विनिश्चयसमुच्चये सत्यपरिच्छेदः प्रथमः ॥[1] ]

[ T. 79b ] विनिश्चयः कतमः । सत्यविनिश्चयो धर्मविनिश्चयः प्राप्तिविनिश्चयः सांकथ्यविनिश्चयश्च ॥

सत्यविनिश्चयः कतमः । चत्वार्यार्यसत्यानि दुःखं समुदयो निरोधो मार्गश्च । दुःखसत्यं कतमत् । तत्सत्त्वजन्मतो जन्माधिष्ठानतश्च वेदितव्यम् (iii) । सत्त्वजन्म कतमत् । [2] नरकसत्त्वजन्मतिर्यक्प्रेतेषु[3] मनुष्येषु पूर्वविदेहेष्वपरगोदानीयेषु जाम्बूद्वीपेषु उत्तरेषु कुरुषु देवेषु चतुर्मा(हा)राजकायिकेषु त्रायस्त्रिंशेषु यामेषु तुषितेषु निर्माणरतिषु परनिर्मितवशवर्त्तिषु ब्रह्मपुरोहितेषु महाब्राह्मेषु परीत्ताभेष्व ([4] प्रमाणाभेषु आभास्वरेषु परीत्तशुभेष्व [4]) प्रमाणशुभेषु (iv) शुभकृत्स्नेष्वनभ्रकेषु पुण्यप्रसवेषु बृहत्फलेष्व संज्ञिसत्त्वेष्ववृहेष्वतपेषु सुदृशेषु[5] सुदर्शनेष्वकनिष्ठेष्वाकाशानन्त्यायतनेषु विज्ञानानन्त्यायतनेष्वाकिञ्चन्यायतनेषु नैवसंज्ञानासंज्ञायतनेषु ॥

जन्माधिष्ठानं कतमत् । भाजनलोकः । वायुमण्डले अप्मण्डलप्रतिष्ठितम् । अप्मण्डले पृथिवीमण्ड(v)लम् । पृथिवीमण्डले सुमेरुः सप्तकाञ्चनपर्वताः चत्वारो द्वीपाः अष्टावन्तरद्वीपाः अभ्यन्तरः समुद्रो बाह्यसमुद्रश्चतस्रः सुमेरुपरिषण्डाः चतुर्महाराजकायिकानां त्रायस्त्रिंशानां स्थानान्तराणि चक्र[ T. 80a ]वाडः पर्वतः आकाशे विमानानि यामानां तुषितानां निर्माणरतीनां परनिर्मितवशवर्त्तिनां देवानां (vi) रूपावचराणां च असुराणां स्थानान्तराणि नारकाणां स्थानान्तराणि । उष्णनरकाः शीतनरकाः प्रत्येकनरकाश्च तदेकत्यानां च तिर्यक्प्रेतानां स्थानान्तराणि यावदादित्याः परिचरन्तो दिशोऽवभासयन्ते वैरोचनास्तावत्साहस्रके लोके सहस्रं चन्द्राणां सहस्रं सूर्याणां सहस्रं सुमेरूणां पर्वतराजानां (vii) सहस्रं चतुर्णां द्वीपानां[1] सहस्रं चतुर्महाराजकायिकानां देवानां[2] सहस्रं त्रायस्त्रिंशानां सहस्रं यामानां सहस्रं तुषितानां सहस्रं निर्माणरतीनां सहस्रं परनिर्मितवशवर्तिनां सहस्रं ब्रह्मलौकिकानामिदमुच्यते सहस्रचूडिको लोकधातुः ॥ सहस्रं सहस्रचूडिकानां धातूनामुच्यते द्वितीयो

---

१. चीनानुवादः । मूले नास्ति । २. ची० सत्त्वलोकः । इत्यधिकम् । ३. ची० मनुष्यदेवगतिषु इत्यधिकम् । ४. अयमंशो मूले पतितः प्रतीयते । ५. ची० नास्ति ।

१. भो. सहस्रपूर्वविदेहानां सहस्रं जम्बुद्वीपानां सहस्रमपरगोदानीयानां सहस्रमुत्तरकुरूणाम् । २. ची. देवानां प्रत्येकमावर्त्यते ।

मध्यमसाहस्रो लोकधातुः ॥ सहस्रं मध्यमसाहस्रधातूनामुच्यते तृतीयो महासाहस्रो लोकधातुः । एवं स त्रिसाहस्रो [ Ch. 12a ] महासाहस्रो लोकधातुः महाचक्रवाड़ पर्वतमण्डल[3] परिवेष्टितः । स च त्रिसाहस्रमहासाहस्रो लोकधातुः समसंवर्त्तविवर्त्तः । तथा च देवः चक्राकारान्[4] वृष्टिबिन्दून् निरन्तरं निरवच्छिन्न[5]-माकाशाद् वर्षति । तथा च पूर्वस्यां दिशि निरन्तरं निरवच्छिन्न[6] मप्रमाणो लोकधातुः संवर्त्तिष्यते वा [ T. 80b ] विवर्त्तिष्यते वा संवर्त्तते वा संवृत्तस्तिष्ठति वा विवर्त्तते वा विवृत्तस्तिष्ठति वा । यथा पूर्वस्यां दिशि तथा सर्वासु दशसु दिक्षु । यश्च सत्त्वलोको यश्च भाजनलोकः कर्मक्लेश[7] जनितः कर्मक्लेशाधिपतेयश्च सर्वमुच्यते दुःखसत्यम् । परिशुद्धलोकधातुस्तु न दुःखसत्यसंगृहीतो न कर्मक्लेश[8] जनितः न कर्मक्लेशाधिपतेयश्च । केवलं महाप्रणिधानेन व्यवदानकुशलमूलाधिपतिना आकृष्यते तदुत्पत्तिस्थानं चाचिन्त्यं केवलं बुद्धेन बुध्यते न ध्यायिनां ध्यानगोचरः किं पुनः चिन्तयताम् ॥

अपि खलु दुःखलक्षणप्रभेदा अष्टौ । "जातिर्दुःखं जरा दुःखं व्याधिर्दुःखं मरणं दुःखम् अप्रियसंप्रयोगो दुःखं प्रियविप्रयोगो दुःखं यदपीच्छन्न लभते तदपि दुःखं संक्षिप्तेन पञ्चोपादानस्कन्धा दुःखम्" ॥ जातिः किमुपादाय दुःखम् । संबाधदुःखतां तदन्यदुःखाश्रयतां चोपादाय । जरा किमुपादाय दुःखम् । काले विपरिणतिदुःखतामुपादाय ॥ व्याधि किमुपादाय दुःखम् । भूतेषु विपरिणतिदुःखतामुपादाय ॥ मरणं किमुपादाय दुःखम् । जीवितविप्रणाशदुःखतामुपादाय ॥

अप्रियसंप्रयोगः किमुपादाय दुःखम् । संयोगज[1] [ T. 81a ] दुःखतामुपादाय ॥ प्रियविप्रयोगः किमुपादाय दुःखम् । विप्रयोगज[2] दुःखतामुपादाय ॥ यदपीच्छन्न लभते तत् किमुपादाय दुःखम् । काम्यफलाभावज[3] दुःखतामुपादाय ॥ संक्षिप्तेन-पञ्चोपादानस्कन्धाः किमुपादाय दुःखम् । दौष्ठुल्यदुःखतामुपादाय ॥ एवमष्टौ संगृहीतानि[4] षड् भवन्ति । संबाधदुःखं विपरिणति दुःखं संप्रयोगदुःखं विप्रयोगदुःखं काम्यफलाभावदुःखं दौष्ठुल्यदुःखं च ॥ एवं षड् बाहुल्येना[5] ष्टौ भवन्ति ।

---

३. ओ. पर्वतमण्डल॰ नास्ति । ४. भो॰ युगधारया । ५. ६. भो॰ नास्ति । ७. ८. चो॰ ०बल० इत्यधिकम् ।

१. २. ३. भो॰ ०ज० नास्ति । ४. भो॰ नास्ति । ५. भो॰ बाहुल्येन नास्ति ।

षड् समानान्यष्टौ भवन्ति[6] ॥ यदुक्तं तिस्रो दुःखताः । तासु अष्टौ दुःखानि संगृहीतानि भवन्ति । तत्र कथं तिसृषु संगृहीतान्यष्टौ अष्टसु वा संगृहीतास्तिस्रः । पारंपर्यलक्षण[7] संग्रहात् । जातिर्दुःखं जरा दुःखं व्याधिर्दुःखं मरणं दुःखम् अप्रियसंप्रयोगो दुःखमिति सन्तानदुःखदुःखता । प्रियविप्रयोगो दुःखं यदपीच्छन्न लभते तदपि दुःखं तद्विपरिणामदुःखता । संक्षिप्तेन पञ्चोपादानस्कन्धा दुःखं तत् संस्कारदुःखता ॥ यदुक्तं द्विविधं दुःखं इति । तत् संवृतिसत्येन दुःखं परमार्थसत्येन दुःखं च । कतमत् संवृतिसत्येन दुःखं कतमत् परमार्थसत्येन दुःखम् । जातिर्दुःखं यावत् यदपीच्छन्न लभते तदपि दुःखमिति संवृतिसत्येन [T. 81b] दुःखम् । यदुक्तं[8] संक्षिप्तेन पञ्चोपादानस्कन्धा दुःखमिति परमार्थसत्येन दुःखम् ॥

दुःखसत्यस्य सामान्यलक्षणं कतमत् । अनित्यलक्षणं दुःखलक्षणं शून्यलक्षणमनात्मलक्षणं च ॥ अनित्यलक्षणं कतमत् । [9] समासतो द्वादशविधम्[9] । असल्लक्षणं विनाशलक्षणं विपरिणतिलक्षणं वियोगलक्षणं सन्निहितलक्षणं धर्मतालक्षणं क्षणलक्षणं प्रबन्धलक्षणं व्याध्यादि[10] लक्षणं चित्तचित्ताकारवृत्तिलक्षणं भोगसंपत्तिविपत्ति[11] लक्षणं भाजनलोकसंवर्त्त विवर्त्त लक्षणम् ॥ असल्लक्षणं कतमत् । स्कन्धधात्वायतनेषु सर्वकालि[1] कात्मात्मीयता नित्याभावः ॥ विनाशलक्षणं कतमत् । संस्काराणामुत्पन्नानां निरोधः । [2] तत्कालं भूत्वाऽभावः[2] ॥ विपरिणतिलक्षणं कतमत् । संस्काराणामन्यथाभावः । [3]प्रबन्धासादृश्येन प्रवृत्तिः[3] ॥ वियोगलक्षणं कतमत् । संस्कारेषु वशित्वभ्रंशः परैःस्वीकरणं वा ॥ सन्निहितलक्षणं कतमत् । समुपस्थितानित्यता[4] । [5] यत्तदानीमेवानुभूयमानानित्यता ॥ धर्मतालक्षणं कतमत् । आगामिन्यनित्यता[6] । [7] यामावश्यमनुभविष्यति ॥[7] क्षणलक्षणं कतमत् । संस्काराणां क्षणादूर्द्ध्वमनवस्थानम् ॥ प्रबन्धलक्षणं कतमत् । अनादिमति संस्कारे उत्पन्ननिरुद्धा[8] नां प्रबन्धाप्रहाणम् ॥ व्याध्यादि[9] लक्षणं कतमत् ।

---

६. चौ० आक्षरिकानुवादस्तु षड् वा अष्टौ वा समसमानि भवन्ति। भो० एतद् नास्ति। ७. भो० लक्षण० नास्ति। ८. भो० अधिकम्। ९. . . ९. भो० एतद् वाक्यं नास्ति। १०. भा० व्याधिजरामरण० ११. भा० ०विपत्ति० नास्ति।

१. भो० सर्वकालिक० नास्ति। २. . . २, ३. . . ३. भो० नास्ति। भा० अस्ति। एतद् वाक्यंद्वय भाष्यतो गृहीतं प्रतीयते। ४. भो० अनित्यताया अभिभवः। ५. भो० नास्ति एतत् भाष्यतो गृहीतम्। चौ० आक्षरिकानुवादस्तु यद्धेतुनाऽनुबद्धस्तदानीमनुभवति। ६. भो० अनित्यतासद्भाव हेत्वभावः। ७. भो० नास्ति। एतत् भाष्यतो गृहीतम्। चौ० अक्षरानुवादस्तु यद्धेतुनाऽनुबद्धोऽवश्यमनुभविष्यति। ८. भो० निरुद्ध० नास्ति। ९ भो० व्याधिजरामरण० १० . .

[10] चतुर्णां भूतानां कालोपभोगः[10] जीवितविपरिणामः ॥ चित्तचित्ताकार- [T82 a] वृत्तिलक्षणं कतमत्। कदाचित् सरागं चित्तं संभवति कदाचिद् वीतरागं चित्तं संभवति। यद्वत् सद्वेषं वा वीतद्वेषं वा समोहं वा वीतमोहं वा संक्षिप्तं वा विक्षिप्तं वा निम्नं वा उन्नतं वा उद्धतं वा अनुद्धतं वा उपशान्तं वा अनुपशान्तं[11] वा समाहितं वा असमाहितं वा। एवमादि चित्तसंसारवृत्तिः ॥ भोगसंपत्तिविपत्ति[12] लक्षणं कतमत्। संपत्तीनामन्ते विपत्तिर्विनाशः ॥ भाजनलोकसंवर्त्तविवर्त्त लक्षणं कतमत्। अग्न्यम्बुवायुभिस्त्रिविधः संवर्त्तविवर्त्तः। तिसृणां संवर्त्तनीनां शीर्षाणि द्वितीय तृतीय चतुर्थध्यानानि। चतुर्थध्याने बाह्यानां[13] विमानानां तु बाह्याभावत[14] एव संवर्त्तविवर्त्तः। [15] केवलं तैर्देवैः [ Ch.12b ] तानि विमानानि सह निर्वर्त्तन्ते सह निरुध्यन्ते [15] एतदुच्यते संवर्त्त विवर्त्तः ॥ अपि खलु [16] त्रयोऽन्तरकल्पाः दुर्भिक्षव्याधिशस्त्रै र्भवन्ति। हीनस्य त्रिविधकल्पस्यान्ते तैः शस्त्रादिभिर्निर्याणं भवति[17]। [1] यदालोकधातुः संवृत्तो भवति[1]। एकोऽन्तरकल्पः प्रथमः[2] अपकर्षः। एकोऽन्तरकल्पः पश्चिम[3] उत्कर्षः। अष्टादश अन्तरकल्पा उत्कर्षापकर्षाः। एवं च विंशतिमन्तरकल्पान् लोकधातुः संवर्त्तते। विंशतिमन्तरकल्पान् लोकधातुर्विवर्त्तते। विंशतिमन्तरकल्पान् लोकधातुर्विवृत्तस्तिष्ठति। संकलिताश्चैतेऽशीतिरन्तरकल्पा एको[4] महाकल्पो भवति। तया कल्पसंख्यया रूपारूप्यावचराणां देवानामायुःप्रमाणं वर्ण्यते ॥ यदुक्तम् अन्यतरे, सत्त्वा आयुःक्षयाद् वा पुण्य[ T82b ]क्षयाद् वा कर्मक्षयाद् वा तस्मादधिष्ठानात् च्यवन्ते इति। तत्र आयुःक्षयः कतमः। काले मरणम्। पुण्यक्षयः कतमः। अकाले मरणम् अपुण्यमरणम्[5]। येन सत्त्वा आस्वाद समापत्त्यां रज्यन्ते। पुण्यक्षयाच्च हेतोः[6] ते जीविताच्च्यवन्ते। कर्मक्षयः कतमः। उपपद्यवेदनीयकर्मणः अपरपर्यायवेदनीयकर्मणश्च उभयोः[7] क्षयान्मरणम् ॥

दुःखलक्षणं कतमत्। तिस्रो दुःखताः अष्टाकारं वा दुःखं षडाकारं वा

---

१० भो० भा० धातेवैगम्यम्। ११. ची० अनुपशान्तमुपशान्तम् इति क्रमः। १२. भा. विपत्ति नास्ति। १३. भोऽनी बाह्यशब्दस्त्वत्रावशिष्टार्थकः प्रतीयते। १४. भो० ०निरोधतः। १५. भो० एतद् वाक्यं नास्ति। भाष्येत्वेते शब्दा विद्यन्ते। १६. भो० अपि खलु नास्ति। १७. भो० तैः कल्पस्य निर्याणं भवति इत्येतावन्मात्रम्।

१...१. भो० वाक्यमिदं नास्ति। २. ३. भो० नास्ति। ४. भो० नास्ति। ५. भो० अपुण्यमरणं नास्ति। ६. भो० नास्ति। ७. भो० नास्ति।

दुःखं[8] बाहुल्येन पूर्वमुक्तं[9] तद् दुःखं नाम। किं प्रतीत्यसूत्रे उक्तं[10] यदनित्यं तद् दुःखमिति। उभयांशिकीमनित्यतां प्रतीत्य दुःखलक्षणं प्रज्ञायते[11]। उत्पादांशिकीमनित्यतां प्रतीत्य दुःखदुःखता प्रज्ञायते। व्ययांशिकीमनित्यतां प्रतीत्य विपरिणामदुःखता प्रज्ञायते। उभयांशिकीमनित्यतां प्रतीत्य संस्कारदुःखता प्रज्ञायते॥ [12]तथा च संस्कारानित्यतां संस्कारविपरिणामतां च संधायोक्तं भगवता मया[13] यत्किंचिद् वेदितमिदमत्र दुःखस्येति॥ अपि खलु उत्पादव्ययधर्मद्वयानुगतेषु संस्कारेषु जात्यादयोऽष्टौ दुःखानि[14] प्रज्ञायन्ते इत्यभिसंधाय बुद्धेन भाषितं यदनित्यं तद् दुःखमिति। अ[15]पि च अनित्येषु संस्कारेषु जात्यादिकं दुःखं प्रज्ञायते इति अनित्यतो दुःखं न सर्वे संस्कारा इत्यत्राभिसन्धिर्वेदितव्यः[15]॥

शून्यतालक्षणं कतमत्। तेषु[1] तस्य अभावः। अनेन नयेन समनुपश्यना-शून्यता। पुनः तेषु[2] अन्यस्य भावः। अनेन नयेन यथाभूतज्ञानभावः[3]। एतद् [T. 830]वताशून्यतोच्यते। यथाभूतज्ञानमविपरीतोऽर्थः॥ तेषु अभावः कतमः। स्कन्धधात्वायतनेषु नित्यध्रुवकूटस्थाविपरिणामधर्मात्मात्मीयाभावः। अनेन नयेन तेषां शून्यता॥ तेषु अन्यस्य भावः[4] कतमः। तेषु[5] एव नैरात्म्यम्। तच्च आत्मनो नास्तिता अनात्मनोऽस्तिता सतां शून्यता[5]॥ एतदभिसंधायोक्तं भगवता[6] सतो यथाभूतज्ञानं भावः। असतो यथाभूतज्ञानमभावः[6]॥ अपि खलु त्रिविधा शून्यता। स्वभावशून्यता तथाभावशून्यता प्रकृतिशून्यता च। आद्या परिकल्पिता द्रष्टव्या। तृतीया परिनिष्पन्नस्वभावा द्रष्टव्या॥

अनात्मलक्षणं कतमत्। यथाऽऽत्मवादे स्थितस्य आत्मलक्षणस्य स्कन्ध-

---

८. चो॰ त्रीणि दुःखानि अष्टौ दुःखानि षड् दुःखानीत्यनुवादः। पूर्वं तिस्रो दुःखता इति पाठो गृहीतः भाष्ये च अष्टाकारमिति वर्तते अत एवं पाठो गृहीतम्। ९. भो॰ षडाकारं वा पूर्वमुक्तं नास्ति। १० भो॰ सूत्रे उक्तं नास्ति ११. भो॰ अक्षरानुवादस्तु अनित्यता उभयांशिकी प्रज्ञायते। उत्पादांशिकी प्रज्ञप्तिः व्ययांशिकी प्रज्ञप्तिश्च। अयं पाठः भाष्यतो गृहीतः। १२ चो॰ एतमर्थमभिसंधायेत्यधिकं प्रतीयते। १३. ची॰ भो॰ अस्ति। भो॰ नास्ति। १४. ची॰ दुःखानि। १५...१५ भो॰ एतद् नास्ति ची॰ तथागतस्येत्यधिकम्। अयं पाठः भाष्यतो गृहीतः। तत्र 'न सर्वे संस्कारा' इति नास्ति।

१. भो॰ यत्र यदभावः। २. भो॰ एषु। ३. भो॰ भावः नास्ति। ४. भो॰ अभावः। ५...५ भो॰ पाठस्त्वेवं प्रतीयते। यन्नैरात्म्यम्। एवं नैरात्म्यस्य नैरात्म्यं सतः शून्यता। ६...६ भो॰ अत्रानुवादस्त्वेवं ; सतोऽपि असतोऽपि अभावः सम्यग् यथाभूतज्ञानम् इति।

धात्वायतनेषु तल्लक्षणस्याभावः। स्कन्धधात्वायतनेषु आत्मलक्षणाभावतामुपादाय। इ[7] दमुच्यते अनात्मलक्षणम्[7] ॥ एतदभिसंधायोक्तं भगवता सर्वे धर्मा अनात्मान इति ॥ अपि चोक्तं भगवता नैतत् सर्वं[8] मम नैषोऽहमस्मि न मे स आत्मा इति। एवमेतं यथाभूतं संप्रज्ञाय द्रष्टव्यम् इति तस्य कोऽर्थ उक्तः। बहिर्धावस्त्वभिसंधायोक्तं नैतत् सर्वं ममेति। कुत एतत्[9]। [T. 83b] बहिर्धावस्तुनि कल्पितात्मीयलक्षणम्। अ[10]तः आत्मीयनिष्कर्षणम्[10]। अध्यात्मवस्तुनि परिकल्पितात्मात्मीयलक्षणम्। अ[11]त आत्मात्मीयोभयनिष्कर्षणम्[11]।

पूर्वमुक्तम् अनित्यं क्षणलक्षणमिति। [पृ. ३६] तत् कथं ज्ञायते[1]। यथा चित्तचैतसिकानां क्षणिकता[2] तथा रूपादीनामपि क्षणिकता[3] द्रष्टव्या। चित्तोपात्ततामुपादाय चित्तैकयोगक्षेमतामुपादाय चित्तविकारतद्विकारतामुपादाय चित्ताश्रयतामुपादाय चित्ताधिपत्यसंभूततामुपादाय चित्तवशवर्त्तितां चोपादाय ॥ अपि खलु अत्यन्तविकारोपलब्धितामुपादाय [Ph. 2A3 Ms 19a] उत्पन्नस्य चानपेक्ष्य प्रत्ययं स्वरसविनाशितामुपादाय रूपस्यापि क्षणिकता द्रष्टव्या ॥

यदुक्तं यत्किंचिद्रूपं सर्वन्तच्चत्वारि महाभूतानि चत्वारि च महाभूतान्युपादायेति। तत्किं सन्धायोक्तम्। संभवं सन्धायोक्तम्। एकदेशाश्रयीभावार्थ उपादायार्थः ॥ यत्र पुनः समुदाये यद्भूतमुपलभ्यते तत्तत्रा[4] स्तीति वक्तव्यम्[5]। [6] (अस्ति एकभौतिकः अस्ति द्विभौतिकः [7]) अ[1] स्ति यावत्सार्वभौतिकः ॥ उपादायरूपेऽपि[8] [Ch. 13a] यदुपादायरूपं यस्मिन् समुदाय उपलभ्यते तत्तत्रास्तीति वेदितव्यम् ॥[9] यत्पुनरुच्यते परमाणुसंचितो रूप[10]समुदाय इति तत्र निःशरीरः

---

७..७. मो० एतद्वाक्यं नास्ति। ८. सूत्रे शब्दोऽयं न दृश्यते। ९. भो. कुत एतन्नास्ति। १०...१० मो० एतन्नास्ति ११...११. भो० एतन्नास्ति।

१ भो० नास्ति। २. ३. टी० क्षणलक्षणम् ४. ची. नद् भूतं तत्र समुदाये। ५. भो० वेदितव्यम्। ६. ची० नान्यत् इत्यधिकम् ७. कोष्ठकान्तर्गतः पाठो मूले भ्रष्टः प्रतीयते। पाठोऽयं चीने भोटे चोभयत्र वर्त्तते। भोटे तु अस्ति त्रिभौतिक इत्यधिकः 'टीकायामप्येतत् प्रतीकत्वेन दृश्यते। ८. मू० वि। ९. ची० नान्यत्। अस्ति एकोपादायरूपिकः अस्ति द्वि-उपादायरूपिकः अस्ति सर्वोपादायरूपिको यथायोगं वा। इत्यधिकम् भो० अस्ति समुदाय एकोपादायरूपिकस्तद्यथा . प्रभा द्वि-उपादायरूपिकस्तद्यथा...त्र्युपादायरूपिकः ..चतुरुपादायरूपिकः .पञ्चोपादायरूपिकस्तद्यथा स एव शब्द इत्यत्रापि यत्रोपलभ्यते भूतं भौतिकं वा तत्र तदस्तीति वेदितव्यं नान्यत्। १०. ची० ०स्थूल० इत्यधिकम्।

परमाणुर्वेदितव्यः । बुद्ध्या[11]पर्यन्तप्रभेदतस्तु परमाणुव्यवस्थानं पिण्डसंज्ञाविभावनतामुपादाय रूपे द्रव्या(ii)परिनिष्पत्तिप्रवेशतां चोपादाय ॥

तत् पुनरेतद् दुःखमस्ति विपुलमसंलिखितं संलिखितं संलिखिता [ T. 84a ] संलिखितं च ॥ अस्ति मध्यमसंलिखितम् अस्ति तनुकमसंलिखितम् अस्ति तनुतरं संलिखितम् अस्ति तनुतमं संलिखितम् अस्त्यदुःखं दुःखप्रतिभासं महासंक्लेशप्रत्युपस्थानं च ॥ कतमद्विपुलं दुःखमसंलिखितम् । (iii) यत्कामावचरमनुपचितकुशलमूलानाम् ॥ कतमत्संलिखितम् । तदेवोत्पन्नमोक्षभागीयानाम्[12] ॥ कतमत्संलिखितासंलिखितम् । तदेव लौकिकवैराग्यायावरोपितकुशलमूलानाम् ॥ कतमन्मध्यमसंलिखितम् । रूपधातूपपन्नानां वि(iii) वर्जितमोक्षभागीयानाम् ॥ कतमत्तनुकमसंलिखितम् ॥ आरूप्योपपन्नानां विवर्जितमोक्षभागीयानाम् ॥ कतमत्तनुतरं संलिखितम् । यच्छैक्षाणाम् ॥ कतमत्तनुतमं संलिखितम् । यदशैक्षाणां जीवितेन्द्रियप्रत्ययं षडायतनम्[1] ॥ कतमददुःखं दुःखप्रतिभासं महासंक्लेशप्रत्युपस्थानम् । यत्पारमिप्राप्तानां बोधिसत्त्वाना[2] मचिन्त्य[3] भवोपपत्तिषु ॥

यदुक्तं मरणं दुःखमिति । तत्र मरणं त्रिविधम् । [ii] कुशलचित्तस्याव्याकृतचित्तस्य च ॥ पटुके चित्तप्रकारे[4] स्वकुशल[5] मूलबलाधानतो ( वा ) परोपसंहारतो वा कुशलचित्तस्य मरणं द्रष्टव्यम् ॥ पटुक एव चित्त[ T. 84b ] प्रकारे[4] स्वाकुशलमूलबलाधा[6] नतो वा परोपसंहारतो वा अकुशलचित्तस्य मरणं द्रष्टव्यम् ॥ पटुके वा चित्तप्रकारे[1] अपटुके वा तदुभयवै [iii] [ Ph.2B3 MS 19b ] कल्यादभिसंस्कारासमर्थस्य वा अव्याकृतचित्तस्य मरणं द्रष्टव्यम् ॥ शुभकारिणः अधःकायस्तत्प्रथमतः शीतीभवति ॥ अशुभकारिणः पुनः ऊर्ध्वकायः शीतीभवति ॥ तत्राशुभकारिणोऽन्तराभवोऽभिनिर्वर्त्तते । तद्यथा कृष्णस्य कुतपस्य निर्भासोऽन्धकारतमिस्रायां वा रात्र्याः ॥ अशुभकारिणस्तद्यथा शुक्लस्य परस्य निर्भासज्योत्स्नाया वा रात्र्याः ॥ अन्तराभव ( : ) कामधातौ रूपधातौ चोपपद्यमानस्या-

---

११. ची० उत्तरोत्तर सूक्ष्मप्रभेदेन इत्यधिकम् भा० बुद्ध्या यावानवयवापकर्षपर्यन्तः शक्यते प्रभेत्तुमितिव्याख्यारूपेण प्रदत्तम । १२. ची० कुशलमूलानाम् इत्यधिकम् ।

१. भो० नामरूपम् । २. ची० महासत्त्वानामित्यधिकम् । ३. ची० अचिन्त्येति महाकरुणाप्रणिधिबलेत्येवमनूद्यते ॥ ४. ची० भो० अत्रोत्तरत्र च प्रचार इति प्रतीयते । ५. मू. स्वकुशल— धानता । ६. मू. ०बलावधान० ।

रूप्यधातोश्च्यवमानस्य। स च मनोमयो गन्धर्व इत्यपि। परं सप्ताहं तिष्ठत्यन्तरेण च्यवते। एकदा न व्यावर्त्तते। तत्रस्थश्च कर्मोपचिनोति [7] सभागांश्च सत्त्वान् पश्यति। यत्र चोपपद्यते तदाकृतिरप्रतिहतगतिश्च। ऋद्धिमानिव चाशु(ii)-गामी उपपत्त्यायतने प्रतिहन्यते। उपपत्त्यायतने तुलावनामोन्नामयोगेन च्यवते प्रतिसन्धिं च बध्नाति। अन्तराभवस्थश्चोपपत्त्यायतने रागमुत्पादयति। यद्वन्यश्च क्लेशः प्रत्ययो भवति। सहरागेणान्तराभवो निरुध्यते कललं च सविज्ञानकमुत्पद्यते॥ स च विपाकस्तत ऊर्ध्वमिन्द्रियाभिनिर्वृत्तिः (iii)यथा प्रतीत्यसमुत्पादे चतसृष्वायोनिषु। अण्डजायां जरायुजायां संस्वेदजायामुपपादुकायाञ्च॥७॥

[ Ch. 13b ] ( अथ विनिश्चये सत्यपरिच्छेदे प्रथमे द्वितीयो भागः )[9]

समुदय [ T. 85a ] सत्यं कतमत्। क्लेशाः[2] क्लेशाधिपतेयश्च कर्म॥ प्राधान्यनिर्देशास्तु ( ? शास्तु ) भगवता तृष्णा पौनर्भविकी नन्दीरागसहगता तत्र तत्राभिनन्दिनी समुदयसत्यनिर्देशेन निर्दिष्टा॥ प्राधा(iv)न्यार्थः कतमः। यः सर्वत्रगार्थः॥ सर्वत्रगार्थः[3] कतमः। तथा हि तृष्णा वस्तुसर्वत्रगा अवस्थासर्वत्रगा अध्वसर्वत्रगा धातुसर्वत्रगा एषणा सर्वत्रगा प्रकारसर्वत्रगा च॥ क्लेशः कतमः। परिसंख्यानतोऽपि लक्षणतोऽप्युत्थान[4] तोऽप्यालम्बनतोऽपि संप्रयोगतोऽपि पर्यायतोऽपि विप्र(v)तिपत्तितोऽपि धातुतोऽपि निकायतोऽपि प्रहाणतोऽपि क्लेशो द्रष्टव्यः॥ परिसंख्यानं कतमत्। षट् क्लेशा दश धा॥ षट् क्लेशाः कतमत्। रागः प्रतिघो मानोऽविद्या विचिकित्सा दृष्टिश्च॥ त एव दृष्टेः पञ्चाकारभेदेन दश भवन्ति॥ लक्षणं कतमत्। यो धर्म उत्पद्यमानोऽप्रशान्तलक्षण उत्प(vi)द्यमानेन येन काय[5] चित्तप्रवन्धाप्रशमप्रवृत्तिः। इदं क्लेशलक्षणम्। उ[6]त्थानं कतमत्। क्लेशानुशयश्चाप्रहीणो भवति क्लेशस्थानीयश्च धर्म आभासगतो भवति। तत्र च अयोनिशो मनस्कारः प्रत्यवस्थितो भवति। एवं क्लेश उत्पद्यते। इ[7]दमुच्यते [8] उत्थानम्॥ आलम्बनं कतमत् सर्वक्लेशप्रयोगः[9]॥ सर्वक्लेशालम्बनं सर्वक्लेशव-

---

७. ची० पूर्वविध्वंशेन कुशलादिचेतनासमुदाचारात् इत्यधिकम्। वाक्यमिदं भाष्यस्थं भाष्यतो गृहीतं प्रतीयते।

१. भो० नास्ति। एतदधिकं चीनानुवादे। २. भो क्लेशो। ची० तृष्णायाः षड्विधाः इत्यधिकम्। ४. ची० प्रत्ययोत्थान०। ५. भो० कायं नास्ति। ६. ची० प्रत्ययो०। ७. भो० नास्ति। ८. ची० प्रत्ययो०। ९. भो० एतन्नास्ति।

स्त्या[10]लम्बनं च। अपि खलु कामावचरः क्लेशः स्थापयित्वा अविद्यां दृष्टिं [T. 856] विचिकित्सां च तदन्यः ऊर्ध्वभूम्यनालम्बनः। ऊर्ध्वभूमिकः क्लेशः अधोभूम्यनालम्बनः। तद्भूमितो[11]वीतरागत्वात्[12]। निरोधमार्गसत्या[13]लम्बनः क्लेशो निरोधमार्गालम्बनानभिष्विक्तः। तत्परिकल्पस्त्वस्यालम्बनमित्युच्यते॥ क्ले[14]शः पुनर्द्विविधः[14]। अवस्तुकालम्बनः सवस्तुकालम्बनश्च॥ अवस्तुकालम्बनः कतमः? दृष्टयो दृष्टिसंप्रयुक्ताश्च धर्माः॥ तदन्यः सवस्तुकालम्बन इत्युच्यते॥

संप्रयोगः कतमः। रागः प्रतिघेन न संप्रयुज्यते। प्रतिघवद्विचिकित्सयापि न संप्रयुज्यते[1]। शिष्टेषु संप्रयोगो लभ्यते॥ यथा रागस्तथा प्रतिघोऽपि द्रष्टव्यः। प्रतिघो रागेण[2] मानेन दृष्ट्या च न संप्रयुज्यते॥ मानः प्रतिघेन विचिकित्सया च न संप्रयुज्यते॥[3] अविद्या द्विविधा[3]। सर्वक्लेशसंप्रयुक्ता अविद्या। असामान्या अविद्या। असामान्या अविद्या कतमा। सत्येष्वज्ञानम्॥ दृष्टिः प्रतिघेन विचिकित्सया च न संप्रयुज्यते॥ क्रोधादय उपक्लेशा अन्योऽन्यं न संप्रयुज्यन्ते॥ आह्रीक्यमनपत्राप्यं च सर्वथाकुशले सामान्येन संप्रयुज्येते॥ स्त्यानमौद्धत्यमाश्रद्ध्यं कौसीद्यं प्रमादश्च सर्वत्र क्लिष्टे संप्रयुज्यन्ते॥

पर्यायः कतमः। स[4]र्वक्लेशा नानार्थाश्रया नानावस्थाः पर्यायाः[4]। संयोजनं बन्धनं अनुशयः उपक्लेशः पर्यवस्थानम् ओघः योगः उपादानम् ग्रन्थः निवरणम् खिलः मलः निघः शल्यः किंचनः दु [T. 86a] श्चरितम् आस्रवः विघातः परिदाहः रणः ज्वरः वनसः विबन्धः॥

संयोजनानि कति कथं संयोजनं कु[5]त्र संयोजनम्[5]। संयोजनानि नव। अनुनयसंयोजनम् प्रतिघसंयोजनम् मानसंयोजनम् अविद्यासंयोजनम् दृष्टिसंयोजनम् परामर्शसंयोजनम् विचिकित्सासंयोजनम् ईर्ष्यासंयोजनम् मात्सर्यसंयोजनं च।

[Ch. 14a] अनुनयसंयोजनं कतमत्। त्रैधातुको रागः। अनुनयसंप्रयोजनेन संप्रयुक्तः त्रैधातुकं नोद्विजयति। अनुद्वेगेन अकुशलसमुदाचारः कुशलासमुदाचारश्च। तेन आयत्यां दुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते।

---

१०. मो० ०मूला०। ११. मो. तनो। १२. मो० एतन्नास्ति। वाक्यमेतत् भाष्यतो गृहीतं प्रतीयते। १३. मो० सत्यं नास्ति। १४. मो० एतन्नास्ति।

१. चो० न 'संप्रयुज्यते नास्ति। मो० अस्ति। २. मो० नास्ति। ३. मो० नास्ति। ४......४ मो० एतद् वाक्यं नास्ति। ५ ... .५ मो० नास्ति।

प्रतिघसंयोजनं कतमत्। सत्वेषु दुःखे दुःखस्थानीयेषु च धर्मेषु चित्तस्य विहिंसा। प्रतिघसंयोजनेन संप्रयुक्तो प्रतिघनिमित्तेषु चित्तं नोपेक्षते। अनुपेक्षया च अकुशलसमुदाचारः कुशलासमुदाचारश्च। तेन आयत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

मानसंयोजनं कतमत्। सप्त मानाः। मानोऽतिमानो मानातिमानोऽस्मिमानोऽभिमान ऊनमानो मिथ्यामानश्च। मानः कतमः। [1]हीनात् श्रेयानस्मि (अ) सदृशेन सदृशोऽस्मीति वा या चित्तस्योन्नतिः। अतिमानः कतमः। सदृशात् श्रेयानस्मि श्रेयसा सदृशोऽस्मीति वा या चित्तस्योन्नतिः। [T 86b] मानातिमानः कतमः। श्रेयसः श्रेयानस्मीति या चित्तस्योन्नतिः। अस्मिमानः कतमः। पञ्चसूपादानस्कन्धेष्वात्मात्मीयाभिनिवेशाद्या चित्तस्योन्नतिः। अभिमानः कतमः। अप्राप्त उत्तरे विशेषा[2] धिगमे प्राप्तो[3] मयेति या चित्तस्योन्नतिः। ऊनमानः कतमः। बह्वन्तरविशिष्टादल्पान्तरहीनोऽस्मीति या चित्तस्योन्नतिः। मिथ्यामानः कतमः। अगुणवतो गुणवानस्मीति या चित्तस्योन्नतिः[1]। मानसंयोजनेन संप्रयुक्त आत्मात्मीयौ न संजानाति। असंज्ञानात् आत्मात्मीयग्रहः अकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां दुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

अविद्यासंयोजनं कतमत्। त्रैधातुकमज्ञानम्। अविद्यासंयोजनेन संप्रयुक्तो दुःखधर्मान् समुदयधर्मान् नाध्यवस्यति। अनध्यवसायेन अकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

दृष्टिसंयोजनं कतमत्। तिस्रो दृष्टयः। सत्कायदृष्टिरन्तग्राहदृष्टिर्मिथ्यादृष्टिश्च। दृष्टिसंयोजनेन संप्रयुक्तो मिथ्यानिःसरणं परिकल्पितविप्रतिसारं पर्येषते अभिनिविशते। मिथ्यानिःसरणाभिनिवेशेनाकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

परामर्शसंयोजनं कतमत्। दृष्टिपरामर्शः शीलव्रत [T. 87a] परामर्शश्च।

---

१ . .१ संदर्भोऽयं त्रिंशिकाभाष्यानुरोधाद् (पृ.२९) अभिधर्मकोशभाष्यानुरोधाच्चैवमनूदितः। तत्र मानलक्षणे असदृशेनेति नन् नास्ति। त्रिंशिकाभाष्ये सदृशेन अभिधर्मकोशभाष्ये च समेन इति दृश्यते। चीनानुवादे तु प्रत्येकं वाक्येषु अस्मीत्यस्य कल्पते (chi) इति अन्ते च स्वभावः (hsing) इति चाधिकं वर्तते। २. ची० विशेषधर्मा०। ३. ची. धर्म इत्यधिकं विद्यते मयेति च न लक्ष्यते।

परामर्शसंयोजनेन संप्रयुक्तो मिथ्यानिःसरणोपायं कल्पयत्यभिनिविशते। मिथ्यानिःसरणोपायाभिनिवेशेनाकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

विचिकित्सासंयोजनं कतमत्। सत्येषु विमतिः। विचिकित्सासंयोजनेन संप्रयुक्तो बुद्धधर्मसंघेषु रत्नेषु विचिकित्सते रत्नत्रयं न समुदाचरति। रत्नत्रयासमुदाचारेणाकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

ईर्ष्यासंयोजनं कतमत्। लाभसत्काराध्यवसितस्य परसंपत्तावमर्षकृतश्चेतसो व्यारोषः। ईर्ष्यासंयोजनेन संप्रयुक्तो लाभसत्कारान् अनुनयति धर्मं न गुरुकरोति। लाभसत्कारगुरुकारेणा[1] कुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

मात्सर्यसंयोजनं कतमत्। लाभसत्काराध्यवसितस्य परिष्कारेषु चेतस आग्रहः। मात्सर्यसंयोजनेन संप्रयुक्त उपचयमनुनयति त[2] दूर्जनतां च न सत्करोति०। उपचयानुनयेनाकुशलसमुदाचारः कुशलासमुदाचारश्च। तेनायत्यां लौकिकदुःखाभिनिर्वृत्तौ दुःखेन संयुज्यते॥

[ Ch. 14b ] बन्धनं त्रिविधम्। रागबन्धनं द्वेषबन्धनं मोहबन्धनं च। राग [ T. 87b ]बन्धनेन सत्त्वानां[3] विपरिणामदुःखतायां बन्धनम्। द्वेषबन्धनेन सत्त्वानां[4] दुःखदुःखतायां बन्धनम्। मोहबन्धनेन सत्त्वानां[5] संस्कारदुःखतायां बन्धनम्। अपि च रागद्वेषमोहान्निश्रित्य कुशलसमुदाचारेषु न वशवर्तितां लभते। अत उच्यते बन्धनम्॥

अनुशयाः सप्त। कामरागानुशयः प्रतिघानुशयः भवरागानुशयः मानानुशयः अविद्यानुशयः दृष्ट्यनुशयः विचिकित्सानुशयश्च। कामरागानुशयः कतमः। कामरागपक्षीयं दौष्ठुल्यम्॥ प्रतिघानुशयः कतमः। प्रतिघपक्षीयं दौष्ठुल्यम्॥ भवरागानुशयः कतमः। रूपारूप्यरागपक्षीयं दौष्ठुल्यम्॥ मानानुशयः कतमः। मानपक्षीयं दौष्ठुल्यम्॥ अविद्यानुशयः कतमः: अविद्यापक्षीयं दौष्ठुल्यम्॥ दृष्ट्यनुशयः कतमः। दृष्टिपक्षीयं दौष्ठुल्यम्॥ विचिकित्सानुशयः कतमः। विचिकित्सापक्षीयं दौष्ठुल्यम्॥ कामैषणाया अविरतस्य कामरागप्रतिघानुशया-

---

१. मो० उत्पद्रहणेन। २. मो० परिष्कारपचयं नानुनयति। ३. ४. ५. मो० नास्ति।

घनुशयाते। भवैषणाया अविरतस्य भवरागानुशयोऽनुशेते। मिथ्याब्रह्मचर्यैषणाया अविरतस्य मानाविद्यादृष्टि विचिकित्सानुशया अनुशेरते। ते सत्त्वा[1] हीनप्रतिपक्षं लभन्ते मदो मानश्चोत्पद्यते आर्यसत्येषु [ T. 44a ] संमोहश्च। मिथ्यामोक्षं मोक्षोपायं च संतोरयन्ति बुद्धशासनधर्मविनयेषु विमतिः विचिकित्सा च॥

उपक्लेशास्तु ये क्लेशास्ते उपक्लेशा अपि भवन्ति। [2] उपक्लेशास्तु न क्लेशाः। क्लेशान् स्थापयित्वा तदन्यः क्लिष्टः संस्कारस्कन्धसंगृहीतः सर्वश्चैतसिको धर्मः। स[3] पुनः कतमः। षड्रागादीन् क्लेशान् स्थापयित्वा क्लिष्टः संस्कारस्कन्धसंगृहीतः क्रोधादिकश्चैतसिको धर्मः[3]। अपि खलु रा[4]गो द्वेषो मोहश्च चैतसिका उपक्लेशा[4] उच्यन्ते[5]। यैश्चित्ते उपक्लेशो न वैराग्यं न विमोक्षो नावरणप्रहाणम्। अत उच्यन्ते उपक्लेशाः। तथा च भगवतोक्तम् दीर्घरात्रं वो रागद्वेषमोहा उपक्लिश्यन्ति विक्षिपन्ति[6] चित्तं संक्लिश्यन्ति।

पर्यवस्थानान्यष्टौ। स्त्यानं मिद्धमौद्धत्यं कौकृत्यमीर्ष्या मात्सर्यमाह्रीक्यमनपत्राप्यं च। पु[7]नः पुनः उद्वेगेन चित्तं पर्यवनह्यन्तीति पर्यवस्थानानि[7]। तथात्र शमथप्रग्रहनिमित्तभावनाकाले तत्सन्निश्रय ब्रह्मचर्या[8] विशुद्धि संगृहीतशील[9] काले[10]चित्तं पर्यवनह्यन्ति॥

ओघश्चतुर्विधः। कामौघः भवौघः दृष्ट्योघः अविद्यौघश्च। स्रोतोऽनुकूलः प्रवाहावर्त्त ओघार्थः। संक्लेशान्वयतः। आद्यः कामैषणाभावना। द्वितीयः भवैषणाभावना। अपरा [ T. 88b ]वुभौ मिथ्याब्रह्मचर्यैषणाभावना। आश्रयाश्रितसंबन्धयोगेन॥

योगश्चतुर्विधः। कामयोगः भवयोगः दृष्टियोगः अविद्यायोगश्च। विसंयोगपरिपन्थकरो योगार्थः। विशुद्धिविपर्ययतः। ते पुनर्यथायोगमेषणात्रयभावना।

उपादानानि चत्वारि। कामोपादानं दृष्ट्युपादानं शीलव्रतोपादानमात्मवादोपादानं च। विवादमूलोपादानं पौनर्भविकोपादानं चोपादानं द्रष्टव्यम्[1]।

---

१. भो० नास्ति। २. भो० अत्रापि नन् प्रामादिकः प्रतीयते। ३. भो० स पुनः....चैतसिको धर्मः नास्ति। भाष्यतो गृहीत। ४. भो० वाक्यद्वयम्। ५. भो० नास्ति। ६. उपक्लिश्यन्ति विक्षिपन्ति नास्ति। ७..७. भो० एतद् वाक्यमत्र नास्ति शीलकाले इत्यस्यानन्तरं वर्त्तते न च वाक्यद्वयम्। ८. भो० ब्रह्मचर्य नास्ति। ९. भो० संगृहीतशील नास्ति। १०. भो० कुशलं चित्तं।

१. भो० नास्ति।

[1]तेन किं भवति[2] । कामरागविनिबन्धविनिबन्धसंक्लेशहेतुना गृहिणोऽन्योऽन्यं विवदन्ति । तद् विवादमूलं प्रथममुपादानम् । दृष्टिरागविनिबन्धविनिबन्धसंक्लेशहेतुना प्रव्रजिता अन्योऽन्यं विवदन्ति । तद् विवादमूलमपरमुपादानत्रयम् ॥ द्वाषष्टिदृष्टिगतयो दृष्ट्युपादानम् । नानाव्रतशीलैः कृच्छ्रं तपः शीलव्रतोपादानम् ॥ तदाश्रिता च सत्कायदृष्टिः आत्मवादोपादानम् ॥ दृष्टिशीलव्रतोपादानाभ्यां तीर्थ्या अन्योऽन्यं विवदन्ति । आत्मवादोपादाने तु तीर्थ्या अन्योऽन्यं न[3] विवदन्ति । धार्मिकैः सार्धमन्योऽन्यं विवदन्ति ॥ एवं च विवादमूलेऽभिनिवेशात् पौनर्भविकदुःखविपाकोपादानाक्षेपाच्चोपादानान्युच्यन्ते[4] ।

ग्रन्थाश्चत्वारः । अभिध्याकायग्रन्थः व्यापादकायग्रन्थः शीलव्रत [ T. 89a ] परामर्शकायग्रन्थः इदंसत्याभिनिवेशोपादानकायग्रन्थश्च । समाहितमनःस्वभावस्य कायस्य परिग्रन्थार्थेन ग्रन्थो वेदितव्यः[5] । [6]तेन किं भवति[6] । चतुर्विधं[7] चित्तं विक्षिप्यते । वित्तादिषु अनुनयहेतोः चित्तं विक्षिप्यते । विवादवस्तुषु अप्रतिपत्तिहेतोः चित्तं विक्षिप्यते[8] । दुष्करशीलव्रतदुःखहेतोः चित्तं विक्षिप्यते । अयोनिशो [ Ch 15a] ज्ञेय[9] सन्तीरणहेतोः चित्तं विक्षिप्यते ॥

निवरणानि पञ्च । कामच्छन्दनिवरणम् व्यापादनिवरणम् स्त्यानमिद्धनिवरणम् औद्धत्यकौकृत्यनिवरणम् विचिकित्सानिवरणं च । कुशलपक्षस्यासंप्रख्यानं निवरणं द्रष्टव्यम्[10] । तच्च प्रव्रज्यायामभिरतौ[11] चोदनायां प्रतिपत्तौ शमथे प्रग्रहे उपेक्षायां च ॥

खिलस्त्रिविधः । रागखिलो द्वेषखिलो मोहखिलश्च । रागद्वेषमोहान्निश्रित्य पूर्वाभ्यासेन रागादिचर्यापरिनिष्पादनम् । चित्तस्यादान्ततया अकर्मण्यतया दुर्विमोक्षतया च सत्त्वैस्तस्याश्रयाया दुर्भेद्यत्वात् खिल इत्युच्यते ॥

मलास्त्रयः । रागमलो द्वेषमलो मोहमलश्च । तच्च रागद्वेषमोहान्निश्रित्य

---

२-३ भो० एतन्नास्ति । ३ भो० नन नास्ति । भाष्येत्वेव विद्यते । "आत्मवादोपादानाभ्यां तीर्थ्या अन्योऽन्य विवदन्ति । तत्रानैकमत्यात । आत्मवादोपादाने त्वन्योन्यन्न विवदन्त्यात्मनोऽस्तित्व प्रति सर्वेषां मनसाम्यात् ॥" ४ अय चीनाक्षरानुवाद । भोटाक्षरानुवादस्तु "एव विवादमूलोपादानादभिनिवेशेन सांपरायिकपुनर्भवोपादानाच्चोपादानान्युच्यन्ते ॥" ५ भो० नास्ति । ६ ६ भो० एतन्नास्ति । ७ भो० नास्ति । ८ भो० चित्त विक्षिप्यते नास्ति । ९ ची विपय ज्ञेय । १० भो० नास्ति । ११ भो० अग्रोत्तरन च प्रत्येक काले इति सबध्यते ।

दौःशील्यम्[1] । तत् संप्रजानद्भिः सब्रह्मचारिभिर्ग्रामे वा अरण्ये वा तथा कुर्वन्तं पश्यद्भिरुच्यते अयं खल्वायुष्मान् करोत्येवं इत्थं चरत्येवमाचरितं ग्रामकण्टक आमिषोऽ[ T. 89b ] शुचि. । अतो मला नाम ॥

निघास्त्रय' । रागनिघो द्वेषनिघो मोहनिघश्च । रागद्वेषमोहान्निश्रित्य दीर्घकालं पुनः पुनर्जातिमरणेषु क्लिश्यन्ते इत्युच्यन्ते निघा. ॥

शल्यास्त्रयः । रागशल्यो द्वेषशल्यो मोहशल्यश्च । रागद्वेषमोहान्निश्रित्य भवे भवोपकरणेषु वा [2]अध्येषणासमुत्पादेन प्रबन्धानुपच्छेदेन[3] बुद्धे धर्मे संघे दुःखसमुदयनिरोधमार्गेषु वा विचिकित्सासमुत्पादेन वा शल्या नाम ॥

किंचनास्त्रयः । रागकिंचनो द्वेषकिंचनो मोहकिंचनश्च । रागद्वेषमोहान्निश्रित्य वित्तसंचयेषु[4] सभयाः सवैरा भूयो विहारविक्षेपाः किंचना नाम ।

दुश्चरितानि त्रीणि । रागदुश्चरितं द्वेषदुश्चरितं मोहदुश्चरितं च । रागद्वेषमोहान्निश्रित्य कायवाङ्मनोदुश्चरितानि चरन्तीति[5] दुश्चरितानीत्युच्यन्ते । पुन' [6]रागद्वेषमोहान्निश्रित्योत्पन्नानां बहूनामकुशलदुश्चरितानामकुशलमूलत्वेन त्रिभिर्व्यवस्थानम् । तत् कथम्[6] । सत्त्वा लोके[7] आमिषकिंचित्कहेतो[8] दुश्चरितं चरन्ति । लोकेऽपकार[9] निमित्तपरिकल्पहतो दुश्चरितं चरन्ति । लोके मिथ्याधर्माभिनिवेशहेतोः दुश्चरितं चरन्ति । इति ते रागद्वेषमोहा दुश्चरितानि नाम अकुशलमूलानि[10] ॥

आस्रवास्त्रय' । कामास्रवो॰ भवास्रवोऽविद्यास्रवश्च । चित्तविसारं स्रुतं कुर्वन्ती[1] त्यास्रवाः इत्युच्यन्ते । ते[2] पुन' कथम्[2] । बहिर्धा विसारं [ T 90a ] निश्रित्य कामास्रवः । अन्तर्धाविसारं निश्रित्य भवास्रव. । तदुभयाश्रयविसारं निश्रित्य अविद्यास्रवः ॥

---

१. चीο अक्षरानुवादस्तु 'शीलशिक्षास्थानविपत्ति' । २. चीο गभीर इति वर्तते । ३ भोο, प्रबन्धानुपच्छेदेन नास्ति । ४ भोο वित्तसचयेषु नास्ति । ५ भोο वाक्यद्वयम् । ६ ६ भोο 'रागद्वेष . तत् कथम्' इति नास्ति । भाष्ये लोभशब्दो वर्तते । तन्नत्वेवम् "लोभद्वेषमोहानामकुशलमूलत्वेन व्यवस्थानमेभिस्त्रिभि." । (५३क) । ७ भोο अत्रोत्तरत्र च 'लोके' इति नास्ति । ८ अय' पाठ. भाष्यतो गृहीत । चीο किंचनास्वाद इति प्रतीयते । ९ चीο वैरο । १०. भोο अकुशलमूलानि नास्ति ।

१ पाठोऽय भाष्यतो गृहीत'. । भोटेऽप्येवं प्रतीयते । चीने तु चित्तं स्रवति विसरति, अविच्छिन्नम् ।
२ २. भोο नास्ति ।

विघातास्त्रयः। रागविघातो द्वेषविघातो मोहविघातश्च। रागद्वेषमोहान्निश्रित्य भवे परिष्कारेषु या एषणा। अभावे विघाते सर्वदा दारिद्य्र दुःखादिभिः क्लिष्टा भवन्तीति विघाताः[१]।

परिदाहास्त्रयः। रागपरिदाहो द्वेषपरिदाहो मोहपरिदाहश्च। रागद्वेषमोहसन्निश्रयेण अयोनिशो निमित्ताभिनिवेशो[4] ऽनुव्यञ्जनाभिनिवेशश्च[5]। तेन निमित्तानुव्यञ्जनाभिनिवेशेन[6] कायं चित्तं च परिदहन्तीति परिदाहाः॥

उपायासास्त्रयः। रागोपायासो द्वेषोपायासो मोहोपायासश्च। रागद्वेषमोहसन्निश्रयेण तत्र तत्र रतिरध्यवसानं च। तद्विपरिणामे शोकपरिदेवनादुःखदौर्मनस्योपायासैः स्पृष्टा भवन्तीत्यु [ Ch. 15b ]पायासाः॥

रणास्त्रयः। रागरणो द्वेषरणो मोहरणश्च। रागद्वेषमोहसन्निश्रयेण शस्त्रादानदण्डादिभिः रणयन्ति नानाविधं भण्डनं कलहं कुर्वन्तीति रागादयो[7] रणा उच्यन्ते॥

ज्वरास्त्रयः। रागज्वरो द्वेषज्वरो मोह [ T. 90b ] ज्वरश्च। रागद्वेषमोहसन्निश्रयेण अधर्मरागेण महा[8] दहनेन परिदहन्ति विषमलोभेन महादहनेन परिदहन्ति मिथ्याधर्मेण महादहनेन परिदहन्तीति ज्वरा नाम॥

वनसास्त्रयः। रागवनसो द्वेषवनसो मोहवनसश्च। रागद्वेषमोहसन्निश्रयेण जातिमरणमूलेषु संस्कारेषु संयोजयन्ति संजनयन्ति सत्त्वान् नानाविधकायेषु पञ्चगतिसंसारेषु अभिनिर्वर्त्तयन्तीति रागादयो[9] वनसा इत्युच्यन्ते॥

विबन्धास्त्रयः। रागविबन्धो द्वेषविबन्धो मोहविबन्धश्च। रागद्वेषमोहसन्निश्रयेण कायसापेक्षता वित्तसापेक्षता बोध्यभावः कोलाहलरतिः परित्तकुशलधर्मलाभेऽपि सन्तोषः। तैः कुशलधर्मान्[1] भावयन्तीति विबन्धाः उच्यन्ते। [2]एवमादयः क्लेशार्थानां पर्याया अप्रमाणाः[2]॥

विप्रतिपत्तिः कतमा। रागः प्रतिघश्च द्वौ क्लेशौ विषये दृष्टौ च विप्रतिपन्नौ[3]।

---

३, भोटानुवादस्त्वेवं प्रतीयते। 'विघातेन हानिं कुर्वन्तीति विघाताः। तत्र 'अभावे 'सर्वदा दारिद्य्र दुःखादिभिः इति च नास्ति। ४, ५, ६, भो० ग्रह'। ७, भो० ते। ८, भो० ते। ९, भो० ते।

१, भो० धर्मान् नास्ति। २ ..२ भो० एतद्वाक्यं नास्ति। ३, भो० टी० तत्रत्येवं पाठः प्रतीयते। "रागो विषये दृष्टौ च विप्रतिपन्नः। यथा रागस्तथा प्रतिघः।"

मानः सर्व्वेषु दृष्टौ च विप्रतिपन्नः। सत्कायान्तग्राहमिथ्यादृष्टयो द्वे ये विप्रतिपन्नाः। दृष्टिपरामर्शशीलव्रतपरामर्शौ दृष्टौ विप्रतिपन्नौ। विचिकित्सा प्रतिपक्षे विप्रतिपन्ना। अविद्या सर्वत्र विप्रतिपन्ना। दश क्लेशा दुःखे समुदये च विप्रतिपन्नाः। [4]तन्निदान-पदस्थानतः[4]। पुनः दश क्लेशा [ T. 91a ] निरोधे मार्गे च विप्रतिपन्नाः। तैस्त्रो-[5] त्राससंजननतः[5] ॥

धातुः कतमः। प्रतिघं स्थापयित्वा तदन्ये सर्वे त्रैधातुकप्रतिसंयुक्ताः[6]। प्रतिघस्तु कामधातुप्रतिसंयुक्तः। अपि खलु रागः कामधातौ सुखसौमनस्योपेक्षाभिः संप्रयुज्यते। यथा कामधातौ तथा प्रथमद्वितीयध्यानयोः। तृतीयध्याने सुखोपेक्षाभ्यां संप्रयुज्यते। तदूर्ध्वमुपेक्षया संप्रयुज्यते ॥ प्रतिघो दुःखदौर्मनस्यो-सुखोपेक्षाभिः, संप्रयुज्यते ॥ मानः कामधातौ सौमनस्योपेक्षाभिः संप्रयुज्यते। प्रथमद्वितीयध्यानयो सुखसौमनस्योपेक्षाभिः संप्रयुज्यते। तृतीयध्याने सुखोपेक्षाभ्यां संप्रयुज्यते। तदूर्ध्वमुपेक्षयैव संप्रयुज्यते ॥ यथा मानस्तथा सत्कायदृष्टिः अन्तग्राहदृष्टिः दृष्टिपरामर्शः शीलव्रतपरामर्शश्च ॥ मिथ्यादृष्टिः कामधातौ दौर्मनस्यसौमनस्यो[7] पेक्षाभिः संप्रयुज्यते। रूपधातावारूप्यधातौ च यथावेदितं संप्रयुज्यते ॥ विचिकित्सा कामधातौ दौर्मनस्योपेक्षाभ्यां संप्रयुज्यते। रूपधातावारूप्यधातौ च यथावेदितं संप्रयुज्यते ॥ [8]अविद्या द्विविधा। संप्रयुक्ता असामान्या च[8]। सर्वक्लेशसंप्रयोगतः संप्रयुक्ता अविद्या यथावेदितं संप्रयुज्यते। आसामान्या अविद्या [ T. 91b ] कामधातौ दौर्मनस्योपेक्षाभ्यां संप्रयुज्यते। तदूर्ध्वधातौ यथावेदितं संप्रयुज्यते ॥ कथं सर्वक्लेशा उपेक्षया संप्रयुज्यन्ते। सर्वक्लेशानामौदासीन्यमागम्यास्तगमनतामुपादाय ॥ अपि खलु रागः कामधातौ षड्विज्ञानकायिकः ॥ यथा रागस्तथा प्रतिघोऽविद्या च ॥ रागो रूपधातौ चतुर्विज्ञानकायिकः। आरूप्यधातौ मनोविज्ञानकायिकः ॥ यथा रागस्तथा अविद्या ॥ मानो दृष्टिर्विचिकित्सा च सर्वत्र मनोविज्ञानकायिकाः ॥ अपि खलु रागः प्रतिघो मानश्च कामधातौ वस्त्वेकदेशप्रवृत्तिकाः। कामधातुवद् रूपधातावारूप्यधातावपि शिष्टाः क्लेशाः सर्वत्र सर्ववस्तु प्रवृत्तिकाः ॥

---

४...४, ५...५, भो० विप्रतिपन्ना इत्यस्मात् पूर्वं वर्त्तते। ६. भो० नास्ति। ७. भो० सौमनस्य दौर्मनस्य०। ८...८ भो० अविद्या......आवेणिका च नास्ति। असामान्या ( pu kung ) विप्रयुक्ता इति किम् ?

निकायः कतमः। द्वौ क्लेशनिकायौ। दर्शनप्रहातव्यनिकायो भावनाप्रहातव्यनिकायश्च। [1]दर्शनप्रहातव्यनिकायः पुनश्चतुर्विधः। दुःखदर्शनप्रहातव्यनिकायः समुदयदर्शनप्रहातव्यनिकायः। निरोधदर्शनप्रहातव्यनिकायः [ Ch. 16a ] मार्गदर्शनप्रहातव्यनिकायश्च[1]। [2]कामधातौ दुःखदर्शनप्रहातव्या दश क्लेशाः। दुःखदर्शनप्रहातव्यवत् समुदयदर्शनप्रहातव्याः निरोधदर्शनप्रहातव्या मार्गदर्शनप्रहातव्याश्च। रूपधातौ दुःखादिचतुर्विधदर्शनप्रहातव्याः प्रत्येकं नव क्लेशाः स्थापयित्वा प्रतिघम्[3]। रूपधातुवदारूप्यधातावपि। एवं च दर्शनप्रहातव्यक्लेशनिकाया द्वादशाधिकं शतं क्लेशाः॥ कामधातौ भावना [ T. 92a ] प्रहातव्याः षट्क्लेशाः। सहजा[4] सत्कायदृष्टिः अन्तग्राहदृष्टिः रागः प्रतिघो मानोऽविद्या च। रूपधातौ भावनाप्रहातव्याः पञ्च क्लेशाः स्थापयित्वा प्रतिघम्। रूपधातुवदारूप्यधातावपि। एवं च भावनाप्रहातव्यनिकायाः षष्टिः क्लेशाः॥

प्रहाणं कतमत्। तथा पर्यायप्रहाणं तेन मनस्कारेण प्रहाणम्। तस्मात् प्रतिलम्भात् प्रहाणम्। तथा पर्यायप्रहाणं कतमत्। परिज्ञानतः परिवर्जनतः प्रतिपक्षलाभतश्च। परिज्ञानं कतमत्। तन्निदानवस्तुपरिज्ञानम् स्वभावपरिज्ञानम् आदीनवपरिज्ञानं च। परिवर्जनं कतमत्। तत्कालोत्पन्नस्यानादानम्। प्रतिपक्षलाभः कतमः। अनुत्पन्नस्यानुत्पादत उत्पन्नस्य[1] वर्जनतो वा प्रतिपक्ष[2] लाभमार्गः॥ तेन मनस्कारेण प्रहाणम्। कीदृशेन मनस्कारेण किं प्रजहाति। असंभिन्नालम्बनेन मनस्कारेण सर्वधर्मा अनात्मान इति पश्यति। अनित्याकारा इति क्लेशान् प्रजहाति। अनित्याकार परिकर्मतः॥ तस्मात् प्रतिलम्भात् प्रहाणम्। कस्मात् प्रतिलम्भात् प्रजहाति। नातीतात् निरुद्धतः। नानागतात् अनुत्पन्नतः। न प्रत्युत्पन्नात् असहभावतः। केवलं क्लेशदौष्ठुल्यप्रतिलम्भात् प्रजहातीति प्रहाणम्। यथा यथा दौष्ठुल्यमुत्पद्यते तथा तथा प्रतिपक्ष उत्पद्यते यथा यथा प्रतिपक्ष उत्पद्यते तथा तथा दौष्ठुल्यनिरोधः। समं समम्। यथा

---

१ १ भो० 'दर्शनप्रहातव्य मार्गदर्शनप्रहातव्यनिकायश्च' नास्ति। २. भा० कामधातौ दश दुःखदर्शनप्रहातव्या। ३ ३. भा० रूपधातौ प्रतिघाभावात्तत्र एव दुःखादिदर्शन प्रहातव्या वेदितव्या नव। दुःखदर्शनप्रहातव्यवत् समुदयनिरोध मार्गदर्शनप्रहातव्या अपि। ४. भो० नास्ति।

१. भो० अनुत्पादन उत्पन्नस्य नास्ति। २. भो० प्रतिपक्ष०नास्ति।

लोके[3] ज्योतिरुत्पद्यते तमश्च निरुध्यते। त[4]द्धिसंयोगतो यदाऽनागतक्लेशोऽनुत्पन्नधर्मेषु [ T. 92b ] अवतिष्ठते तत् प्रहाणमुच्यते ॥

क्लेशाधिपतेयं कर्म कतमत्। चेतना[5] कर्म चेतयित्वा कर्म च। 'सर्वं कर्मलक्षणं नाम'[6] ॥ पुनः कर्म पञ्चविधम्। उपलब्धिकर्म कारित्रकर्म व्यवसायकर्म परिणतिकर्म प्राप्तिकर्म च। अस्मिंस्त्वर्थे यद् भूयसा व्यवसायकर्माभिप्रेतम् ॥ चेतनाकर्म कतमत्[7]। पुण्यकर्म अपुण्यकर्म आनिञ्ज्यकर्म च ॥ चेतयित्वा कर्म कतमत्। कायकर्म वाक्कर्म मनस्कर्म च। तानि त्रीणि[8] कायवाङ्मनस्कर्माणि अकुशलानि कुशलानि[9] च। अकुशलानि कतमानि। दशाकुशलकर्मपथाः। प्राणातिपातः अदत्तादानम् काममिथ्याचारः मृषावादः पिशुनवाक्[10] परुषवाक् संभिन्नप्रलापः अभिध्या व्यापादः मिथ्यादृष्टिश्च। कुशलानि कतमानि। दश कुशलकर्मपथाः। प्राणातिपाताद् विरतिः अदत्तादानाद्विरतिः काममिथ्याचाराद्विरतिः मृषावादाद्विरतिः पिशुनवाचो विरतिः परुषवाचो विरतिः संभिन्नप्रलापाद्विरतिः[11] अनभिध्या अव्यापादः सम्यग्दृष्टिश्च ॥ अपि च प्राणातिपातादीनां यथायोगं[12] पञ्च लक्षणप्रभेदाः[1]। वस्तुतः[2] आशयतः प्रयोगतः क्लेशतः निष्ठागमनतश्च ॥

यदुक्तं सूत्रे[3] चेतनाकर्म। कतमानि चेतनाकर्माणि पराज्ञप्तिसंचेतनीयताकर्म परसंज्ञप्तिसंचेतनीयताकर्म अविज्ञायसंचेतनीयताकर्म मूलाभिनिवेशसंचेतनीयताकर्म विपर्याससंचेतनीयताकर्म च। तेषु मूलाभिनिवेशसंचेतनीयताकर्म विपर्याससंचेतनीयता कर्म च। तेषु मूलाभिनिवेशसंचेतनीयता कर्मविपर्याससंचेतनीयताकर्मभ्यां[4] यदि कृतं भवत्युपचितं च न [5]नास्य विपाकः [ T.93a ] प्रतिसंवेद्यते। कृतं समुदाचारसमुत्थापितम्। उपचितं च वासना समुपचितम् ॥

---

३. भो० नास्ति। ४. भो० दौष्ठुल्य०। ५. भाष्यतः संचेतनीयता इति प्रतीयते। ६...६ भो० कर्मलक्षणसंगृहीतम्। ७. भो० चित्ताभिसंस्कृतं मनस्कर्म इत्यधिकम्। ८. भो० नास्ति। ९. ची० कुशलान्यकुशलानीति क्रमः। १०. भो० पैशुन्यम्। ११. भो० प्राणातिपाताद्विरतिर्यावत् संभिन्नप्रलापाद्विरतिरितिरिति पाठः। १२. भो० नास्ति।

१. भो० चत्वारि लक्षणानि। २. भो० नास्ति। ३. भो० यदत्रास्ति। ४. भा० पश्चिमाभ्यां तु कर्मभ्याम्। ५. भा० न न इत्यस्य स्थाने अवश्यम्। ६. भो० यदत्रास्ति।

यदुक्तं सूत्रे[6] नियतवेदनीयं कर्म[7] इति। कतमे नियमाः[8] कर्मक्रियानियमः विपाकप्रतिसंवेदनानियमः अवस्थानियमश्च॥

तत्र दशानामकुशलानां कर्मपथानां विपाकफलं त्रिषु[9] अपायेषु। मृदुमध्याधिमात्राणां तिर्यक्प्रेतनरकेषु विपाकः[10]। निष्यन्दफलं प्रत्येकं तदानुरूप्येण मनुष्येषूपपन्नाना[11]मात्मभावपरिग्रहयोर्विपत्तिः। अधिपतिफलं प्रत्येकं तदानुरूप्येणैव बाह्यानां भावानां विपत्तिः। यथोक्तं सूत्रे। दशानां कुशलानां कर्मपथानां विपाकफलं दे[12]वमनुष्यगतिषूपपद्यमानानां देवेषु मनुष्येषु वा विपाकः[12]। निष्यन्दफलं [ Ch. 16b ] तदायतनेषु प्रत्येकं तदानुरूप्येण आत्मभावपरिग्रहयोः संपत्तिरभिनिर्वर्त्तते[13]। अधिपतिफलं तदायतनेषु प्रत्येकं तदानुरूप्येणैव बाह्यानां भावानां संपत्तिरभिनिर्वर्त्तते[14]।

कुशलानामकुशलानां च कर्मणां सुगतौ दुर्गतौ च विपाकोऽभिनिर्वर्त्तते। तत्राक्षेपकेण कर्मणा परिपूरकेण च कर्मणा। आक्षेपकं कर्म कतमत्। येन फल[15] विपाकोऽभिनिर्वर्त्तते[16]। परिपूरकं कर्म कतमत्। येनोपपन्न इष्टानिष्टफलं वेदयते। येन[17] एकेन कर्मणा एकमात्मभावमाक्षिपति वा अनेकेन कर्मणा एकमात्मभावमाक्षिपति वा अनेकेन कर्मणा अनेकमात्मभावमाक्षिपति वा॥ एकः सत्त्वोऽनेकेन कर्मणा समन्वागतः। तत्र विपाकफलवेदनायाः कः क्रमः। कायो[1] यद् औदारिकं पूर्वं पच्यते च्युतिकाले प्रत्युपस्थितं वा पूर्वं बहुलीकारतां गतं वा अग्रसमाचरितं वा। तद्विपाकः पूर्वं पच्यते॥

यदुक्तं सूत्रे[2] त्रिविधं कर्म[3] पुण्यकर्म अपुण्य [ T. 93b ] कर्म आनिञ्ज्यकर्म च। पुण्यकर्म कतमत्। कामप्रतिसंयुक्तं कुशलं कर्म। अपुण्यकर्म कतमत्। अकुशलं कर्म। आनिञ्ज्यकर्म कतमत्। रूपारूप्यप्रतिसंयुक्तं कुशलं कर्म॥ यदुक्तं सूत्रे[4] अविद्यालम्बनाः संस्काराः पुण्यानिञ्ज्या अपुण्यानिञ्ज्याश्चेति। कतमे

७. भो० कर्म० नास्ति। ८. चीनानुवादे नियतवेदनीयं कर्म प्रश्नत्वेनोपन्यस्तम्। भाष्यस्य चीनानुवादे तु नियमा इत्यस्यैव प्रश्नत्वेनोपन्यस्तत्वाद् भोटे च तथा दर्शनात् तदनुरोधात् प्रसंगानुरोधाच्चैवं पाठः ९. भो० नास्ति। १०......१०. भो० नास्त्येतत्। भाष्यतो गृहीतं प्रतीयते। ११. भो० मनुष्याणाम्। १२...१२ भो० देवेषु मनुष्येषु। १३...१४. भो० अभिनिर्वर्त्तते नास्ति। १५. भो० फल० नास्ति। १६. भो० नास्ति। १७. भो० नास्ति, चीं० प्रत्येकमावर्त्त्यते।

१. भो० तत्र। २. भो० यदत्रास्ति। ३. भो० त्रिविधं कर्म नास्ति। ४. भो० नास्ति।

पुण्यानिञ्ज्या अविद्यालम्बनाः संस्कारा उत्पद्यन्ते। द्विविधः संमूढः। फलविपाकसंमूढः तत्त्वार्थसंमूढश्च। फलविपाकसंमूढस्यापुण्याः संस्काराः। तत्त्वार्थसंमूढस्य पुण्यानिञ्ज्याः संस्काराः।

प्राणातिपातस्य कर्मपथस्य[5] लोभद्वेषमोहैः प्रयोगः। द्वेषेणैव निष्ठा। प्राणातिपातवत् परुषवाग्व्यापादयोरपि कर्मपथयोः। अदत्तादानस्य कर्मपथस्य लोभद्वेषमोहैः प्रयोगः। लोभेनैव निष्ठा। अदत्तादानवत् काममिथ्याचाराभिध्ययोः कर्मपथयोः। मृषावादस्य कर्मपथस्य लोभद्वेषमोहैः प्रयोगः। त्रयाणामन्यतमेन निष्ठा। मृषावादवत् संभिन्नप्रलापपिशुनवाचोः कर्मपथयोः। मिथ्यादृष्टेः कर्मपथस्य रागद्वेषमोहैः प्रयोगः। मोहेनैव निष्ठा।

यदुक्तं सूत्रे[12]साधारणं कर्म असाधारणं कर्म बलवत्कर्म दुर्बलं कर्म च। साधारणं कर्म कतमम्। यत्कर्म[13] भाजनलोके नानाविधं[15] विकल्पं करोति॥ असाधारणं [ T. 94a ] कर्म कतमत्। यत्कर्म[14] सत्त्वलोके नानाविधं[16] विकल्पं करोति॥ अपि च सत्त्वानामन्योन्याधिपतेयं कर्मापि। येन कर्मबलेन[17] सत्त्वानामन्योन्याधिपतिप्रत्ययः प्रोक्तः। [18]तेषामन्योन्याधिपतिबलतस्तद्प्युच्यते साधारणं कर्म। यतः सूत्रे उक्तम्।[19] यथा सत्त्वानामन्यैः सत्त्वैः[20]सह अन्योन्यं दर्शनादिकं नोपभोगो नोपलब्धिः। बलवत्कर्म कतमत्। प्रतिपक्षबलवत्पुद्गलस्य[1] संचेतनीयमकुशलं कर्म। प्रतिपक्षबलविस्कम्भणेन [2]वेदनीयनरककर्मप्रवृत्तेः दृष्टधर्मवेदनायाः परिनिष्पादनं दृष्टधर्मवेदनीयनरककर्मप्रवृत्तेरनुत्पादः। येन [3]तत्कर्म बलवदित्युच्यते। प्रातिपक्षिककर्मबलतः[4] सर्वं संचेतनीयं कुशलं कर्म बलवदित्युच्यते। तत्कर्म निश्रित्योक्तं भगवता ममार्यश्रावका अप्रमाणवैपुल्यकर्मणि[5] चित्तं कुशलं परिभावयन्ति अभिसंस्कृते सप्रमाणे कर्मणि नाक्षिपन्ति नावस्थापयन्ति न परिहापयन्ति तत्संख्याते। यदपि प्रतिपक्षदुर्बलपुद्गलस्य[6] संचेतनीयमकुशलं कर्म तदपि कुशला-

---

५. भो० अस्मिन् संदर्भे कर्मपथस्य कर्मपथयोः नास्ति। १२. भो० यदत्रास्ति। १३. भो० कर्म नास्ति। १४. भो० नास्ति। १५. भो० नास्ति। १६. भो० नास्ति। १७. भो० नास्ति। १८-१८. भो० एतन्नास्ति। १९. भो० एतन्नास्ति। २०. भो० नास्ति।

१. भो० पुद्गलस्य नास्ति। २-२. भो० यत् सत्त्वो नरकं वेदयते तद् दृष्टे धर्मे वेदितं भवति। यद् दृष्टे धर्मे वेदितं भवति तद् वेदनाया अनुत्पादः। ३-३. भो० एतन्नास्ति। ४. भो० ०बलतः नास्ति। ५. भो० कर्मणि नास्ति। ६. भो० नास्ति। ६. भो० पुद्गलस्य नास्ति। ७. भो०

त्कर्मणो[7] बलवदित्युच्यते। यत् पुनः संचेतनीयं कर्म नियतविपाकमप्रहीणमपरिज्ञातं तद् बलवत् कर्म[8] इत्युच्यते। तन्मनसि निधायोक्तं सर्वं न कुशलाकुशलं कर्म नियतविपाकमार्यमार्गेण[9] प्रहीणं बलवत् कर्म[10] इत्युच्यते। यदपि कामप्रतिसंयुक्तमकुशलं कर्म यदपि पूर्वमभ्यस्तं यदपि पदस्थं यदप्यसाध्यमभिसंस्कृतं कर्म[11] अपरिनिर्वाणधर्मतः[12] तदपि प्रकृत्या बलवत् कर्म इत्युच्यते[13]। क्षेत्रतोऽपि चित्ताभिसंस्कारतोऽपि बल[ T. 94b ]वत् कर्म वेदितव्यम्। पुनर्नवभिराकारैर्बलवत् कर्म वेदितव्यम्। तद्यथा क्षेत्रतः वस्तुतः स्वभावतः आश्रयतः मनसिकारतः आशयतः [ Ch. 171 ] सहायतः बहुलीकारतः बाहुजन्यतश्च॥ तद्विपर्ययेण दुर्बलं कर्म॥

भगवतोक्तं य एवं वदेद्यथाऽयं पुरुषपुद्गलः कर्म करोत्युपचिनोति तथा तथा विपाकं प्रतिसंवेदयत इत्येवं सति ब्रह्मचर्यभासो[14] न भवत्यवकाशश्च न प्रज्ञायते सम्यग् दुःखक्षयाय दुःखस्यान्तक्रियायै। यस्त्वेवं वदेद्यथायं पुरुषपुद्गलो यथावेदनीयं कर्म करोत्युपचिनोति तथा तथा यथावेदनीयं विपाकं प्रतिसंवेदयत इत्येवं सति ब्रह्मचर्यभासो[15] भवत्यवकाशश्च प्रज्ञायते सम्यग् दुःखक्षयाय दुःखस्यान्तक्रियायै। इति यदुक्तं सूत्रे तत्र कोऽभिसंधिः। [1] तत्र बुद्धा मनस्येवं मिथ्यावचनं प्रतिषेद्धुं कामयन्ते। यत्[1] सुखसहगतस्य कर्मणः सुखसहगत एव विपाकोऽभिनिर्वर्त्तते दुःखसहगतस्य कर्मणो दुःखसहगत एव विपाकोऽभिनिर्वर्त्तते अदुःखासुखसहगतस्य कर्मणस्तत्सहगत[2] एव विपाकोऽभिनिर्वर्त्तते। इत्येवमुक्तम्। सम्यग्वचनं त्वेवमनुमन्यते। सुखसहगतस्य कर्मणः[3] सुखवेदनीयस्य सुखविपाकोऽनुज्ञायते दुःखवेदनीयस्य दुःखविपाकोऽनुज्ञायते अदुःखासुखवेदनीयस्यादुःखासुखविपाकोऽनुज्ञायते। दुःखसहगतस्य कर्मणः सुखवेदनीयस्य सुखविपाकोऽनुज्ञायते दुःखवेदनीयस्य दुःखविपाकोऽनुज्ञायते अदुःखासुखवेदनीयस्यादुःखासुखविपाकोऽनुज्ञायते। अदुःखासुख[ T. 95a ] सहगतस्य कर्मणः सुखवेदनीयस्य

---

कुशलात् कर्मणः नास्ति। ८. भो० नास्ति। ९. भो० आर्यमार्गेण नास्ति। १०. भो० नास्ति। ११. भो० अभिसंस्कृतं कर्म नास्ति। १२. भो० एतत्तु असाध्यमित्यस्मात्पूर्वम्। १३. ची० तदपि ... इत्युच्यते इति प्रत्येकमावर्त्यते। १४-१५. भो० ०भासो।

१...१. भो० 'तत्र बुद्धा. . .यत्' इत्यस्य स्थाने 'भगवत एषोऽभिसंधिः।' २. भो० अदुःखासुखसहगतः। ३. भो० नास्ति।

सुखविपाकोऽनुशायते दुःखवेदनीयस्य दुःखविपाकोऽनुशायते अदुःखासुखवेदनीयस्या-दुःखासुखविपाकोऽनुशायते। एषोऽभिसन्धिः तत्र सूत्रे[4] ।

अपि खलु कर्मप्रभेदस्त्रिविधः। संवरकर्म असंवरकर्म नैवसंवरनासंवरकर्म च। संवरकर्म कतमत्। प्रातिमोक्षसंवरसंगृहीतं कर्म[5] ध्यानसंवरसंगृहीतं कर्म[6] अनास्रव-संवरसंगृहीतं कर्म[7] च॥ प्रतिमोक्षसंवरसंगृहीतं कर्म कतमत्। सप्त[8] संघोपपन्नानां संवराः। भिक्षुसंवरः भिक्षुणीसंवरः शिक्षमाणसंवरः श्रामणेरसंवरः श्रामणेरी संवरः उपासकसंवरः उपासिकासंवरः उपवाससंवरश्च॥ कतमं पुद्गलमधिकृत्य प्रव्रजितसंवरो व्यवस्थापितः। दुश्चरितविवेकचरितं कामविवेकचरितं पुद्गलमधिकृत्य। कं पुद्गलमधिकृत्य उपासकोपासिकासंवरो व्यवस्थापितः। दुश्चरितविवेकचरित-मधिकृत्य नो तु कामविवेकचरितं पुद्गलम्॥ कं पुद्गलमधिकृत्योपवाससंवरो व्यवस्थापितः। नैव दुश्चरितविवेकचरितं न कामविवेकचरितं पुद्गलमधिकृत्य॥ उपासकानामेकत्यानां शिक्षास्थानीयानां शिक्षासमन्वागम इत्युच्यते। उपासक-संवरोऽसमन्वागम इत्युच्यते। उक्तः समन्वागमः[9] शीलविपत्तिरप्युच्यते। यथा षण्डपण्डकानाम्। तेषा [ T. 95b ] मुपासकसंवरः प्रतिषिध्यते न वा। तेषा-मुपासकसंवरो न प्रतिषिध्यते। केवलं तेषामुपासकत्वं प्रतिषिध्यते। भिक्षुभिक्षु-णीनामुभयप्रव्रजितानां संघस्य[2] पक्षस्य संसेवोपासनाऽयोग्यत्वात्। पण्डकः पुनः पञ्चविधः। जातिपण्डकः ईर्ष्यापण्डकः पक्षपण्डकः आसेचनकपण्डकः आपत्पण्डकश्च॥

ध्यानसंवरसंगृहीतं कर्म कतमत्[3]। दौःशील्यसमुत्थापकानां क्लेशानां बीजोपघाते सति कामेभ्यो वीतरागस्य या विरतिः। प्रथमध्यानवीतरागस्य या विरतिः। द्वितीयध्यानवीतरागस्य या विरतिः। तृतीयध्यानवीतरागस्य या विरतिः। [4]सोच्यते ध्यानसंवरसंगृहीतं कायवाक्कर्म[4]।

---

४. भो० तत्र सूत्रे नास्ति। ५, ६, ७. भो० नास्ति। ८. भो० अष्टौ। तत्त समीचीनम्।
९. भो० उक्तः समन्वागम इति नास्ति।

१. भो० 'केवलं तेषां' इति नास्ति। २. भो० 'प्रव्रजितानां संघस्य' इति नास्ति। ३. भो० अत्रोत्तरत्र च संगृहीतं कर्म इति नास्ति। ०संवर इत्येवास्ति। ४..४. भो० एतन्नास्ति।

अनास्रवसंवरसंगृहीतं कर्म[5] कतमत्। सत्यदर्शनेन अनास्रवमनस्कारबलेन प्रतिलब्धा[6] अनास्रवा विरतिः। [7]सोऽयनं अनास्रवसंवरसंगृहीतं कर्म[7] ॥

असंवरकर्म[8] कतमत्। अभिजन्मतो वा तत्कर्मसमादानतो वा तत्कर्माध्याचारनिश्चयः असंवर इत्युच्यते[9]। ते पुनरसंवराः कतमे[10]। औरभ्रिकाः कौक्कुटिकाः शौकरिकाः शाकुनिकाः मात्स्यिकाः लुब्धकाः वागुरिकाः चौराः घातकाः गोबंधकाः नागबंधकाः माण्डलिकाः नागमण्डलिकाः कारागारिकाः सूचकाः उपघातकाः प्रभृतयः।

नैवसंवरनासंवर संगृहीतं कर्म कतमत्। नैवसंवरनासंवरविहारः[11] कुशलाकुशलं कर्म ॥

[ Ch. 17b ] [12]पुनः कर्मप्रभेदस्त्रिविधः[13]। सुखवेदनीयं कर्म दुःखवेदनीयं कर्म अदुःखासुखवेदनीयं कर्म च ॥ सुखवेदनीयं कर्म कतमत्। कामावचरात् तृतीयध्यानं यावद् यत् कुशलं कर्म ॥ दुःखवेदनीयं कर्म कतमत्। अकुशलं कर्म ॥ अदुःखासुखवेदनीयं कर्म कतमत्। तृतीयध्यानादूर्ध्वं यत् [ T. 96a ] कुशलं कर्म ॥

[1]कर्मप्रभेदः पुनस्त्रिविधः[1]। दृष्टधर्मवेदनीयं कर्म उपपद्यवेदनीयं कर्म अपरपर्यायवेदनीयं कर्म च ॥ दृष्टधर्मवेदनीयं कर्म कतमत्। तत्कर्म दृष्टे धर्मे यस्य विपाको विपच्यते। तच्च मैत्रीसमापत्तेर्व्युत्थितस्य परिहाणिं वृद्धिं वा कुर्वतः दृष्टे धर्मे विपाको लभ्यते[2] ॥ यथा मैत्रीसमापत्तेर्व्युत्थितस्य तथा अरणसमापत्तेर्व्युत्थितस्य निरोधसमापत्तेर्व्युत्थितस्य स्रोतापत्तिफलादुच्चलितस्य अर्हत्त्वफलादुच्चलितस्य च। बुद्धप्रमुखे संघे कुशलमकुशलं च कुर्वतः दृष्टे धर्मे विपाको लभ्यते[3] ॥ अन्येषां तीव्राशयप्रयोगेण कुशलाकुशलकर्मप्रतिपन्नानामपि दृष्टे धर्मे विपाको लभ्यते[4] ॥ उपपद्यवेदनीयं कर्म कतमत्। तत्कर्म अनन्तरे जन्मनि यस्य विपाको विपच्यते।

---

५. भो० संगृहीतं कर्म इति नास्ति। ६. भो० अनास्रव मनस्कार बलेन प्रतिलब्धा इति नास्ति। ७. .७. भो० एतन्नास्ति। ८. भो० नास्ति। ९. भो० असंवर इत्युच्यते इति नास्ति। १०. भो० एतन्नास्ति। अत्र मोटे भाष्यतश्च एवं पाठः प्रतीयते। असंवरः कतमः। औरभ्रिक कौक्कुटिक... ... सूचकोपघातकप्रभृतीनामभिजन्मतो वा तत्कर्मसमादानतो वा तत्कर्माध्याचारनिश्चयः ॥ ११. भो० विहार नास्ति। .१२...१३. भो० एतन्नास्ति।

१...१. भो० एतद्वाक्यं नास्ति। २, ३, ४. भो० दृष्टे धर्मे विपाको लभ्यते इति नास्ति।

तद्यथा पंचानन्तर्यकर्माणि। अपि च यान्यन्यानि कुशलाकुशलानि कर्माणि ये[5]-षामनन्तरे जन्मनि विपाको विपच्यते तत्सर्वमुच्यते उपपद्यवेदनीयं कर्म[5] ॥ अपरपर्यायवेदनीयं कर्म कतमत्। तत्कर्म यस्यानन्तरजन्मनोऽपरपर्यायेषु विपाको विपच्यते। [6]तदुच्यतेऽपरपर्यायवेदनीय कर्म[6]।

[7]पुन कर्मप्रभेदश्चतुर्विध। कृष्ण कृष्णविपाक कर्म शुक्लं शुक्लविपाक कर्म कृष्णशुक्लं कृष्णशुक्लविपाक कर्म अकृष्णशुक्लाविपाकं व्यामिश्रं कर्म[7] ॥ कृष्णं कृष्णविपाकं कर्म कतमत्। अकुशल कर्म ॥ शुक्लं शुक्लविपाक कर्म कतमत्। त्रैधातुक कुशल कर्म ॥ कृष्णशुक्ल कृष्णशुक्लविपाक कर्म कतमत्। कामप्रतिसयुक्तं कर्म[9] यत् कर्म वा आशयत प्रयोगतो वा शुक्लं यत् कर्म वा प्रयोगत कृष्णमाशयत शुक्लम् ॥ अकृष्णशुक्लाविपाक व्यामिश्रं कर्म कतमत्। प्रयोगानन्तर्यमार्गेऽनास्रव कर्म[10] अविशेषेण च सर्वस्थानास्रवकर्मण परिपन्थमानुकूल्यस्वभावमधिकृत्य यक-द्वोपकषायाणा शौचेयाना मौनेयाना च कर्मणा यथाक्रम व्यवस्थान वेदितव्यम्[10]। [11]तथा च दानानि शौचेयानि कर्माणि[11]। दानकर्म कतमत्। निदानत उत्थानत प्रदेशत स्वभावतश्च दानकर्म विकल्प्यते। निदानम् अलोभोऽद्वेषोऽमोहश्च कुशलमूलानि[1] ॥ उत्थान तान्येव चेतनासहगतानि ॥ [T 96b] प्रदेशो देयानि वस्तूनि ॥ स्वभावो दानसपत्तिकाले[2] कायवाङ्मनस्कर्माणि[3] ॥ दानसपत् कतमा। अभीक्ष्ण-दानत अपक्षपातदानत इच्छापरिपूरणदानतश्च दानसपद् वेदितव्या[4]। अपि च अनिश्रितदानत महाशुचिदानत परम[5] प्रहृष्टदानत अभीक्ष्णदानत क्षेत्रभाजनदानत नवपुराणसविभागदानतश्च दानसपद् वेदितव्या ॥ देयसपत् कतमा। अनभिद्रुत देयवस्तुत अपरापहृतदेयवस्तुत अकुथितविमलदेयवस्तुत शुचिदेयवस्तुत धर्मार्जित देयवस्तुतश्च देयसंपद् वेदितव्या ॥

५ ५ भो० येषामनन्तरे उपपद्यवेदनीय कर्म इति नास्ति। ६ ६ भो० एतन्नास्ति। ७ ७ भो० पुन व्यामिश्र कर्मेति यावन्नास्ति। ८ ९ भो० नास्ति। १० १० भो० अविशेषेण वेदितव्यमिति यावन्नास्ति। एतत्तु भाष्यतो गृहीत प्रतीयते। ११ ११ भो० एतद् वाक्यं नास्ति।

१ भो० कुशलमूलानि नास्ति। २ भो० सपत्तिकाले इति नास्ति। ३ भो० कायवाक्कर्माणि। ४ भो० दानसपद् वेदितव्या नास्ति। ५ भो० परम० नास्ति।

[5]तथा चोक्तं सूत्रे शीलसमन्वागतः प्रातिमोक्षसंवरसंवृत आचारगोचरसंपन्नो-ऽणुमात्रेष्ववद्येषु महाभयदर्शी शिक्षते शिक्षापदेषु इति[6] ॥ कथं शीलसमन्वागतो भवति । विशुद्धशीलानुरक्षणोपपन्नतः ॥ कथं प्रातिमोक्षसंवरसंवृतो भवति । नैर्याणिकशीलसंधारणतः[8] ॥ कथमाचारगोचरसंपन्नो भवति । विशुद्धशीलसहभावतोऽगर्हितानाम् ॥ कथमणुमात्रेष्ववद्येषु महाभयदर्शी भवति ॥ तीव्रेण गौरवेण शीलशिक्षणतः ॥ कथं शिक्षते शिक्षापदेषु । शिक्षाशीलानां शिक्षणतः ॥

अ[9]तःपरं शीलमारभ्य यद् बुद्धेन सूत्रेषु निर्दिष्टं कायेन संवृतो भवतीत्येवमादि[9] ॥ कथमुच्यते कायेन वाचा संवृतो भवति । संप्रजन्यपरिगृहीततः ॥ कथं कायवाक्संपदा संपन्नो भवति । आपत्त्यनापत्तिज्ञानतः ॥ कथं परिशुद्धकायवाक्समुदाचारो भवति । अविप्रतिसारादीनां क्रमेण संप्रतिपत्त्या[10] यावत् समाधिलाभसन्निश्रय [ T. 97a ] तः ॥ कथं कुशलकायवाक्समुदाचारो भवति । क्लिष्टवितर्कव्यवकीर्णतः ॥ कथमनवद्यकायवाक्समुदाचारो भवति । मिथ्याप्रणिधिपरिवर्जनेन ब्रह्मचर्यभावनातः ॥ कथमव्याबध्यकायवाक्समुदाचारो भवति । परेषामनघतया सुखसंवासतः ॥ कथमानुलोमिककायवाक्समुदाचारो भवति । निर्वाणप्राप्त्यनुकूलतः ॥ कथ [ Ch. 182 ]मनुच्छविककायवाक्समुदाचारो भवति । कुशलस्य च्छादनतोऽकुशलस्य प्रकाशनतश्च ॥ कथमौपयिककायवाक्समुदाचारो भवति । सब्रह्मचर्यग्रहणशीलतः ॥ कथं प्रतिरूपकायवाक्समुदाचारो भवति । गुरुषु गुरुस्थानीयेषु चानिहितमानतः ॥ कथं प्रदक्षिणकायवाक्समुदाचारो भवति । अववादे प्रदक्षिणग्राहिततः ॥ कथमतप्तकायवाक्समुदाचारो भवति । कष्टतपोहीनाधिमुक्ति विवर्जिततः ॥ कथमननुताप्यकायवाक्समुदाचारो भवति । समुत्सृष्टभोगकर्मान्ताविप्रतिसारितः । कथमविप्रतिसारिकायवाक्समुदाचारो भवति । अल्पमात्रेणासंतुष्टाविप्रतिसारितया ॥

यदुक्तं भगवता यथा सत्त्वाः कर्मस्वकाः कर्मदायादाः कर्मयोनीयाः कर्मप्रतिसरणाः कर्म[1] सर्वान्[2] सत्त्वान् विभजति [ T. 97b ] उच्चनीचतया हीन-

---

५...६ भो० तथाचोक्तं...शिक्षापदेषु इति यावन्नास्ति । ७, चीनानुवादे महा० इत्यधिकं प्रतीयते । ८, भो० सद्भावतः । ९...९, भो० अतः परं...त्येवमादि यावन्नास्ति । भा० यद्भगवता सूत्रान्तरेषु इति पाठः । अयमंशः भाष्यतो गृहीतः । १०, भो० नास्ति ।

१, भो० कर्मणा । तत्र कर्मणा सत्त्वा...इति पाठ प्रतीयते विभजन्तीति च नास्ति । २, भो० नास्ति ।

प्रणीततया[3] इति ॥ कथं सत्त्वाः कर्मस्वका भवन्ति । स्वयंकृतकर्मविपाकप्रतिसंवेदनतामुपादाय ॥ कथं कर्मदायादा भवन्ति । स्वयं कृतकर्मविपाकप्रतिसंवेदनतायां कुशलाकुशलानां कर्मणामन्योन्यदायादतामुपादाय ॥ कथं कर्मयोनीया भवन्ति । सत्त्वाना[4] महेतुविषमहेतुविवर्जितयोनितामुपादाय ॥ कथं कर्मप्रतिसरणा भवन्ति । प्रतिपक्षकर्मविशिष्टकर्मबन्धनाश्रयतामुपादाय ॥ कथं कर्मणा सत्त्वा उच्चनीचा भवन्ति । यत् कर्मणा सुगतौ दुर्गतौ चात्मभावप्रभेदं[5] लभन्ते ॥ कथं हीनप्रणीता भवन्ति । यत् सत्त्वा गुणदोषप्रभेदेन[6] समन्वागता भवन्ति ॥

यदुक्तं भगवता सत्त्वानां कर्मविपाकोऽचिन्त्य इति । तत्र कथं कर्मविपाकश्चिन्त्यः[7] कथं कर्मविपाकोऽचिन्त्यः । कुशलस्य कर्मणो देवमनुष्यगतिष्विष्टविपाकला[8] भश्चिन्त्यः[9] । अकुशलस्य कर्मणो हीनासु तिसृषु दुर्गतिषु[9] अनिष्टविपाकलाभश्चिन्त्यः[10] । अयं चिन्त्यः[10] ॥ येन कर्मणा सत्त्वानामात्मभावविपाकवैचित्र्यमभिनिर्वर्त्तते सोऽचिन्त्यः ॥ तदेव कुशलाकुशलं कर्मस्थानवस्तुहेतुविपाकप्रकारादिप्रभेदैरचिन्त्यम् । विविधबाह्यवस्तुवैचित्र्याभिनिर्वर्त्तकं कर्माचिन्त्यम् । मणिमन्त्रौषधिमुष्टियोगप्रतिसंयुक्तं कर्माचिन्त्यम् । योगिनां प्रभावकर्माचिन्त्यम् । बोधिसत्त्वानां [ T. 98a ] वशिताभिः क्रियमाणं कर्मा[1] चिन्त्यम् । तद्यथा आयुर्वशितया चित्तवशितया परिष्कारवशितया कर्मवशितया उपपत्तिवशितया अधिमुक्तिवशितया प्रणिधानवशितया ऋद्धिवशितया ज्ञानवशितया धर्मवशितया । [2]एवं च बोधिसत्त्वानां महासत्त्वानामेवमादिभिर्वशिताभिर्यत्कर्म क्रियते तदचिन्त्यम्[2] । सर्वेषां बुद्धानां बुद्धकृत्यानुष्ठानं कर्माचिन्त्यम् ॥

तथा च समुदयसत्यं समासतो लक्षणप्रभेदेन चतुर्विधम् । हेतुलक्षणं समुदयलक्षणं प्रभवलक्षणं प्रत्ययलक्षणं च । हेतुलक्षणं कतमत् । पुनर्भववासनाया आहारकं कारणं हेतुरिति हेतुलक्षणं वेदितव्यम् ॥ समुदयलक्षणं कतमत् । तेषां तेषामुपचितवासनानां सत्त्वानां तस्मिंस्तस्मिन् सत्त्वनिकाये उदयस्य कारणमिति

३. सूत्रे पाठ ईदृशः । चीनानुवादे क्रमस्तु प्रणीत हीनतया इति । ४. भा० भो० संभवाय इत्यधिकम् । ५. भो० प्रभेदं भो० नास्ति । ६. प्रभेदेन नास्ति । ७. भो० अचिन्त्य इत्यपपाठः प्रतीयते । ८. भो० ०लाभः नास्ति । ९. भो० नरकतिर्यक्प्रेत दुर्गतिषु । १०. भो० अयं चिन्त्यः नास्ति ।

१. भो० वशिताकर्म । २...२. भो० एवं च...तदचिन्त्यं यावन्नास्ति ।

समुदयलक्षणं वेदितव्यम्॥ प्रभवलक्षणं कतमत्। प्रत्यात्मं सन्तानानां[1] सर्व[1]-प्रकारप्रकर्षोत्पत्त्यत्य कारणमिति प्रभवलक्षणं वेदितव्यम्॥ प्रत्ययलक्षणं कतमत्। सत्त्वानामन्यान्यप्राप्त्यप्रत्ययकारणमिति प्रत्ययकारणं वेदितव्यम्॥ [Ch. 18b]

(अथ विनिश्चये सत्यपरिच्छेदे प्रथमे तृतीयो भागः[5])।

निरोधसत्यं कतमत्। लक्षणतः गाम्भीर्यतः संवृतितः परमार्थतः अपरिपूर्तितः परिपूर्तितः निरलंकारतः सालंकारतः शेषतः अशेषतः अग्रतः पर्यायतश्च निरोधसत्यं वेदितव्यम्॥

लक्षणतः कतमत्। तथतायामार्ये[6] मार्गे क्लेशानामनुत्पादो यो निरोधाश्रयो निरोधको निरोधस्वभावो वा[7]॥ [8]तन्निरोधसत्यलक्षणम्[8]॥ [T. 98b] यदुक्तं भगवता [9]चक्षुः श्रोत्रं घ्राणजिह्वाकायाः मनश्च तेषु आयतनेषु नामरूपयोरात्यन्तिकनिरोधो न शेषः[9] इति। यथोक्तं [10]तदायतनं वेदितव्यं यथा[11] चक्षुश्च निरुध्यते रूपसंज्ञा च विरज्यते यावत् मनश्च निरुध्यते धर्मसंज्ञा च विरज्यते इति। अनेन नयेन आलम्बनानां प्रापणं तथतायामालम्बनादूर्ध्वं सास्रवाणां धर्माणां निरोधः[1]। तन्निरोधसत्य[2] लक्षणम्॥

गाम्भीर्यतः कतमत्। यत् तेषां[3] संस्काराणामुपशमान्निरोधः। [4]तथोपशमात् तेषां संस्काराणां निरोधो[4] नान्यो वाच्यः नानन्यो वाच्यः नाप्यन्यो नाप्यनन्यो वाच्यः न नैवान्यो नानन्यो वाच्यः॥ कुतः। निष्प्रपञ्चतः। [5]अस्मिंस्त्वर्थे प्रपञ्चोत्पत्तिः न संचिन्त्या न मार्गेण न न्यायेन न कुशलप्रयोगेण चिन्त्या[5] इति। यदुक्तं भगवता तेषां षण्णां स्पर्शायतनानां क्षयो विरागो निरोधो व्युपशमोऽस्तंगम इत्येवमादि[6]। स्यादन्यः स्यादनन्यः स्यादन्योऽपि नान्योऽपि

३. भो० नास्ति। ४. भो० सर्व० नास्ति। चीं० आक्षरिकानुवादस्तु 'अप्रमाण' इति। ५. भो० नास्ति। ६. भो० आर्य नास्ति। ७. भो० अनुवादस्तु यत्र निरुध्यते येन निरुध्यते यच्च निरुध्यते इत्येवं प्रतीयते। ८...८. भो० एतन्नास्ति। ९...९. भो० यत्र चक्षुषो निरोधो वर्ण संज्ञाया अभाव धर्मस्य निरोधो धर्मसंज्ञाया अभाव तदेतत् स्थानेषु वेदितव्यम्। इत्येवं प्रतीयते १० चीं० त्वया इत्यधिकं प्रतीयते। ११. भो० यत्र; चीं० यत्रायतने इति प्रतीयते।

१. भो० अनेन पर्यायेण तथतायामालम्बनानां सास्रवधर्माणां निरोधः। २. भो० सत्य० नास्ति। ३. भो० नास्ति। ४..४. भो० तथोपशमात्..निरोध इत्यस्य स्थाने सः। ५..५. भो० अत्र प्रपञ्चोत्पत्तिरयोनिशो न चिन्त्या इति। भाष्ये त्वेवं वाक्यमेकं वर्तते--पुनरस्मिंस्त्वर्थे अयोनिशश्चिन्त्येति अमार्गेणाऽन्यायेनानपेतचिन्त्येत्यर्थः। ६. भो० निष्प्रपञ्चे प्रपञ्च उत्पद्यते इत्यधिकम्।

स्यान्नैवान्यो नानन्योऽपि इति निष्प्रपञ्च प्रपञ्च उत्पद्यते ॥ यावत् षडायतनानि तावत् प्रपञ्चाः ॥ यदा षडायतनानां निरोधश्छेदः[7] तदा प्रपञ्चानां विरतिः[8] ॥

संवृतितः कतमत् । लौकिकमार्गैर्बीजनिग्रहेण यो निरोधो लभ्यते[9] । अतो भगवता तदांशिकनिर्वाणमित्युच्यते ॥ परमार्थतः कतमत् । आर्यप्रज्ञया[10] बीजनिर्मूलनेन यो निरोधो लभ्यते[11] ॥ अपरिपूरितः कतमत् । शैक्षाणां [ T. 99a ] स्रोतआपन्नफलसंग्रहेण वा सकृदागामिफलसंग्रहेण वा अनागामिफलसंग्रहेण वा यो निरोधः ॥ परिपूरितः कतमत् । अशैक्षाणामर्हत्त्वफलसंग्रहेण यो निरोधः ॥ निरलंकारतः कतमत् । प्रज्ञाविमुक्तानामर्हतां यो निरोधः ॥ सालंकारतः कतमत् । उभयभाग[12] विमुक्तानां त्रैविद्यानां षडभिज्ञानामर्हतां यो निरोधः ॥ शेषतः कतमत् । सोपधिशेषो[13] यो निरोधः ॥ अशेषतः कतमत् । निरुपधिशेषो[14] यो निरोधः ॥ अग्रतः कतमत् । बुद्धानां बोधिसत्त्वानामप्रतिष्ठितनिर्वाणसंग्रहेण यो निरोधः । स्पर्शविहारिणां[1] सर्वेषां सत्त्वानां हितसुखाधिष्ठानतः ॥

पर्यायतः कतमत् । अशेषप्रहाणं प्रतिनिःसर्गः व्यन्तीभावः क्षयो विरागो निरोधो व्युपशमोऽस्तंगम इत्येवमादि ॥ किमुपादायोच्यते अशेषप्रहाणम् । परिशिष्टानि पदान्युपादाय ॥ किमुपादायोच्यते प्रतिनिःसर्गः । पर्यवस्थानप्रतिनिःसरणतामुपादाय ॥ किमुपादायो[ Ch. 19a ]च्यते क्षयः । दर्शनमार्गेण प्रतिपक्षविसंयोगलाभता[2] मुपादाय ॥ किमुपादायोच्यते विरागः । भावनामार्गेण प्रतिपक्षविसंयोगलाभतामुपादाय ॥ किमुपादायो[ T 99b ]च्यते निरोधः । आयत्यां तत्फलदुःखानुत्पत्तितामुपादाय ॥ किमुपादायोच्यते व्युपशमः । दृष्टे धर्मे तत्फलचित्तदुःखासमुदाचारतामुपादाय ॥ किमुपादायोच्यतेऽस्तंगमः । सोपधिशेष[3] निरोधतामुपादाय ॥

किमुपादाय स निरोधः पुनरसंस्कृतमित्युच्यते । लक्षणत्रयविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनर्दुर्दर्श इत्युच्यते । चर्मचक्षुषो दिव्य-

---

७. मो० नास्ति । ८. मो० अभावः । ९. मो० उत्पद्यते । १०. मो० आर्य० नास्ति । ११. मो० उत्पद्यते । १२. मो० भाग० नास्ति । १३. मो० स्कन्धशेषेण । १४. मो० स्कन्धशेषेण । १४. मो० स्कन्धशेषाभावेन ।

१. मो० नास्ति । २. मो० लाभ० नास्ति । ३. चो० आक्षरिकानुवादस्तु भवाधिष्ठानशेष इति मो० स्कन्धशेष इति ।

समुदयलक्षणं वेदितव्यम्॥ प्रभवलक्षणं कतमत्। प्रत्यात्मं सन्तानानां[1] सर्व[1]-प्रकारप्रकर्षोद्भवस्य कारणमिति प्रभवलक्षणं वेदितव्यम्॥ प्रत्ययलक्षणं कतमत्। सत्वानामन्यान्यप्राप्त्यत्ययकारणमिति प्रत्ययकारणं वेदितव्यम्॥ [Ch. 18b]

(अथ विनिश्चये सत्यपरिच्छेदे प्रथमे तृतीयो भागः[5])।

निरोधसत्यं कतमत्। लक्षणतः गाम्भीर्यतः संवृतितः परमार्थतः अपरिपूर्तितः परिपूरितः निरलंकारतः सालंकारतः शेषतः अशेषतः अग्रतः पर्यायतश्च निरोधसत्यं वेदितव्यम्॥

लक्षणतः कतमत्। तथतायामार्य[6] मार्गे क्लेशानामनुत्पादो यो निरोधाश्रयो निरोधको निरोधस्वभावो वा[7]॥ [8]तन्निरोधसत्यलक्षणम्[8]॥ [T. 98b] यदुक्तं भगवता [9]चक्षुः श्रोत्रं घ्राणजिह्वाकायाः मनश्च तेषु आयतनेषु नामरूपयोरात्यन्तिकनिरोधो न शेषः[9] इति। यच्चोक्तं [10]तदायतनं वेदितव्यं यथा[11] चक्षुश्च निरुध्यते रूपसंज्ञा च विरज्यते यावत् मनश्च निरुध्यते धर्मसंज्ञा च विरज्यते इति। अनेन नयेन आलम्बनानां प्रापणं तथतायामालम्बनादूर्ध्वं सास्रवाणां धर्माणां निरोधः[1]। तन्निरोधसत्य[2] लक्षणम्॥

गाम्भीर्यतः कतमत्। यत् तेषां[3] संस्काराणामुपरमान्निरोधः। [4]तथोपरमात् तेषां संस्काराणां निरोधो[4] नान्यो वाच्यः नानन्यो वाच्यः नाप्यन्यो नाप्यनन्यो वाच्यः न नैवान्यो नानन्यो वाच्यः॥ कुतः। निष्प्रपञ्चतः। [5]अस्मिंस्त्वर्थे प्रपञ्चोत्पत्तिः न संचिन्त्या न मार्गेण न न्यायेन न कुशलप्रयोगेण चिन्त्या[5] इति। यदुक्तं भगवता तेषां षण्णां स्पृष्ट्यायतनानां क्षयो विरागो निरोधो व्युपशमोऽस्तंगम इत्येवमादि[6]। स्यादन्यः स्यादनन्यः स्यादन्योऽपि नान्योऽपि

३. भो० नास्ति। ४. भो० सर्व० नास्ति। ची० आक्षरिकानुवादस्तु 'अप्रमाण' इति। ५. भो० नास्ति। ६. भो० आर्य नास्ति। ७. भो० अनुवादस्तु यत्र निरुध्यते येन निरुध्यते यच्च निरुध्यते इत्येवं प्रतीयते। ८...८. भो० एतन्नास्ति। ९...९. भो० यत्र चक्षुषो निरोधो वर्ण संज्ञाया अभाव धर्मस्य निरोधो धर्मसंज्ञाया अभाव तदेतत् स्थानेषु वेदितव्यम्। इत्येवं प्रतीयते १० ची० त्वया इत्यधिकं प्रतीयते। ११. भो० यत्र; ची० यत्रायतने इति प्रतीयते।

१. भो० अनेन पर्यायेण तथतायामालम्बनानां सास्रवधर्माणां निरोधः। २. भो० सत्य० नास्ति। ३. भो० नास्ति। ४...४. भो० तथोपरमात् .निरोध इत्यस्य स्थाने सः। ५..५. भो० अत्र प्रपञ्चोत्पत्तिरयोनिशो न चिन्त्या इति। भाष्ये त्वेवं वाक्यमेकं वर्तते—पुनरस्मिंस्त्वर्थे अयोनिशश्चिन्त्येति अमार्गेणाऽन्यायेनानपेतचिन्त्येत्यर्थः। ६. भो० निष्प्रपञ्चे प्रपञ्च उत्पद्यते इत्यधिकम्।

स्यान्नैवान्यो नानन्योऽपि इति निष्प्रपञ्च प्रपञ्च उत्पद्यते ॥ यावत् षडायतनानि तावत् प्रपञ्चाः ॥ यदा षडायतनानां निरोधश्छेदः[7] तदा प्रपञ्चानां विरतिः[8] ॥

संवृतितः कतमत् । लौकिकमार्गैर्बीजनिग्रहेण यो निरोधो लभ्यते[9] । अतो भगवता तदांशिकनिर्वाणमित्युच्यते ॥ परमार्थतः कतमत् । आर्यप्रज्ञया[10] बीजनिर्मूलनेन यो निरोधो लभ्यते[11] ॥ अपरिपूरितः कतमत् । शैक्षाणां [ T. 99a ] स्रोतआपन्नफलसंग्रहेण वा सकृदागमिफलसंग्रहेण वा अनागामिफलसंग्रहेण वा यो निरोधः ॥ परिपूरितः कतमत् । अशैक्ष्याणामर्हत्त्वफलसंग्रहेण यो निरोधः ॥ निरलंकारतः कतमत् । प्रज्ञाविमुक्तानामर्हतां यो निरोधः ॥ सालंकारतः कतमत् । उभयभाग[12] विमुक्तानां त्रैविद्यानां षडभिज्ञानामर्हतां यो निरोधः ॥ शेषतः कतमत् । सोपधिशेषो[13] यो निरोधः ॥ अशेषतः कतमत् । निरुपधिशेषो[14] यो निरोधः ॥ अग्रतः कतमत् । बुद्धानां बोधिसत्त्वानामप्रतिष्ठितनिर्वाणसंग्रहेण यो निरोधः । स्पर्शविहारिणां[1] सर्वेषां सत्त्वानां हितसुखाधिष्ठानतः ॥

पर्यायतः कतमत् । अशेषप्रहाणं प्रतिनिःसर्गः व्यन्तीभावः क्षयो विरागो निरोधो व्युपशमोऽस्तंगम इत्येवमादि ॥ किमुपादायोच्यते अशेषप्रहाणम् । परिशिष्टानि पदान्युपादाय ॥ किमुपादायोच्यते प्रतिनिःसर्गः । पर्यवस्थानप्रतिनिःसरणतामुपादाय ॥ किमुपादायो[ Ch. 19a ]च्यते क्षयः । दर्शनमार्गेण प्रतिपक्षविसंयोगलाभता[2] मुपादाय ॥ किमुपादायोच्यते विरागः । भावनामार्गेण प्रतिपक्षविसंयोगलाभतामुपादाय ॥ किमुपादायो[ T. 99b ]च्यते निरोधः । आयत्यां तत्फलदुःखानुत्पत्तितामुपादाय ॥ किमुपादायोच्यते व्युपशमः । दृष्टे धर्मे तत्फलचित्तदुःखासमुदाचारतामुपादाय ॥ किमुपादायोच्यतेऽस्तंगमः । सोपधिशेष[3] निरोधतामुपादाय ॥

किमुपादाय स निरोधः पुनरसंस्कृतमित्युच्यते । लक्षणत्रयविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनर्दुर्दर्श इत्युच्यते । चर्मचक्षुषो दिव्य-

७. मो० नास्ति । ८. मो० अभावः । ९. मो० उत्पद्यते । १०. मो० आर्य० नास्ति । ११. मो० उत्पद्यते । १२. मो० भाग० नास्ति । १३. मो० स्कन्धशेषेण । १४. मो० स्कन्धशेषेण । १४. मो० स्कन्धशेषाभावेन ।

१. मो० नास्ति । २. मो० लाभ० नास्ति । ३. ची० आक्षरिकानुवादस्तु गवाधिष्ठानशेष इति मो० स्कन्धशेष इति ।

चक्षुपथ गोचरातिक्रमणतामुपादाय ॥ किमुपादाय स निरोधः पुनरचलमित्युच्यते । गतिषु संचारविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरमत[1] मित्युच्यते । तृष्णात्रयविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरमृतमित्युच्यते । स्कन्धमारविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरनास्रवमित्युच्यते । सर्व[1] क्लेशमारविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनर्लयनमित्युच्यते । अनवद्यप्रीतिसुखसंनिश्रयतामुपादाय ॥ किमुपादाय स निरोधः पुनर्द्वीपमित्युच्यते । त्रैधातुकपरिच्छेदतामुपादाय ॥ किमुपादाय स निरोधः पुनस्त्राणमित्युच्यते । सर्वमहादुःखोपद्रवापगमतामुपादाय ॥ किमुपादाय स निरोधः पुनः शरणमित्युच्यते । आशयप्रयोगयोरवन्ध्यपदस्थानतामुपादाय ॥ किमुपादाय स निरोधः पुनः परायणमित्युच्यते । सर्वस्य[1] परमार्यत्वस्यागमनपदस्थानतामुपादाय ॥ किमुपादाय स निरोधः पुनरच्युतमित्युच्यते । जातिविरहतामुपादाय ॥ किमुपादाय स निरोध पुनर्निर्वारमित्युच्यते । सर्वक्लेशसन्तापविरहतां[2] सर्वेच्छाऽलाभदुःखमहासन्तापविरहतां चोपादाय ॥ किमुपादाय स निरोधः पुनर्निष्परिदाहमित्युते । सर्व[3] शोकपरिदेवनादुःखदौर्मनस्य विक्षेपविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनः क्षेममित्युच्यते । हिंसा[4] भयरहितविहारपदस्थानतामुपादाय ॥ किमुपादाय स निरोधः पुनः शिवमित्युच्यते । लाभवस्तुपदस्थान[5] तामुपादाय ॥ किमुपादाय स निरोधः पुनः सौचर्णिकमित्युच्यते परमार्थसुखाधिष्ठानतामुपादाय ॥ किमुपादाय स निरोधः पुनः स्वस्त्ययनमि- [ T. 100a ]त्युच्यते । तत्सुखप्रयोगप्रातिपदस्थानतामुपादाय ॥ किमुपादाय स निरोधः पुनरारोग्यमित्युच्यते । सर्वावरणरो[6] गविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरानिञ्ज्यमित्युच्यते । सर्वविक्षेपविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनर्निर्वाणमित्युच्यते । अनिमित्तशान्तमहा[7] सुखविहारपदस्थानतामुपादाय ॥ किमुपादाय स निरोधः पुनरजातमित्युच्यते । प्रतिसंध्युपपत्तिविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरभूतमित्युच्यते । तदुत्तरकालोत्पत्ति-

---

४. भाष्यतः शब्दोऽयं गृहीतः, तत्रापि न स्पष्टः । भोटेऽस्यार्थः अग्रन्थिरिति भवति चीने च अवक्रम् । ५. भो० सर्व० नास्ति ।

१. भो० नास्ति । भो० सर्वेच्छासन्तापविरहताम् इत्येव । ३. भो० सर्व० नास्ति । ४. भो० हिंसा० नास्ति । ५. भो० पदस्थान० नास्ति । ६. भो० रोग० नास्ति । ७. भो० महा० नास्ति ।

विरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरस्तमित्युच्यते। पूर्वान्तकर्मक्लेशबलवदा[8] वेधविरहतामुपादाय ॥ किमुपादाय स निरोधः पुनरसंस्कृतमित्युच्यते। वर्त्तमानकर्म[9] क्लेशानभिसंस्कार पदस्थानतामुपादाय। किमुपादाय स निरोधः पुनरनुत्पन्नमित्युच्यते। अनागतसन्तत्युत्पादविरहतामुपादाय ॥

तथा च निरोधसत्यस्य समासतश्चत्वारो लक्षणप्रभेदाः। निरोधलक्षणं शान्तलक्षणं प्रणीतलक्षणं निःसरणलक्षणं च। किमुपादाय निरोधलक्षणम्। क्लेशविसंयोगतामुपादाय ॥ किमुपादाय शान्तलक्षणम्। दुःखविसंयोगतामुपादाय। किमुपादाय प्रणीतलक्षणम्। सुखशुच्यधिष्ठानता[10]मुपादाय ॥ किमुपादाय निःसरणलक्षणम्। नित्यहिताधिष्ठानतामुपादाय ॥

( अथ विनिश्चये सत्यपरिच्छेदे प्रथमे चतुर्थो भागः )[1]

मार्गसत्यं कतमत्। येन दुःखं परिजानीते समुदयं प्रजहाति निरोधं साक्षात्करोति मार्गं भावयति। एतत् संक्षेपेण मार्गसत्यलक्षणमित्युच्यते ॥ पुनः मार्गः पञ्चविधः। संभारमार्गः प्रयोगमार्गः दर्शनमार्ग भावनामार्गः [T, 100b] निष्ठामार्गश्च ॥

संभारमार्गः कतमः। पृथग्जनानां शीलम् इन्द्रियद्वाररक्षा भोजने मात्राज्ञता प्रथमरात्रौ तदुत्तररात्रिषु वा नित्यमविद्ध वीर्यभावना[2] शमथविपश्यना संप्रजन्यविहारश्च ॥ यद्वा पुनरन्यदौपनिषदं कुशलम् श्रुतमयी प्रज्ञा[2] चिन्तामयी प्रज्ञा[3] भावनामयी प्रज्ञा ॥ तद्भावनया अभिसमयविमोक्षस्थानभाजनां प्रतिलभते ॥

प्रयोगमार्गः कतमः। यः संभारमार्गः स प्रयोगमार्गः। यस्तु प्रयोगमार्गः स न संभारमार्गः। संभारमार्गोपचितानि निर्वेधभागीयानि कुशलमूलानि ऊष्मगतः[4] मूर्धानः[4] सत्यानुकूलक्षान्तिः[5] लौकिकाग्रधर्मश्च ॥ ऊष्मगतं कतमत्। प्रत्यात्मं सत्येष्वालोकलब्धः समाधिः प्रज्ञा संयोगश्च ॥ मूर्धानं कतमत्। प्रत्यात्मं सत्येष्वालोकवृद्धः समाधिः प्रज्ञा संयोगश्च[6] ॥ सत्यानुकूलक्षान्तिः कतमा। प्रत्यात्मं सत्येष्वे-

---

८. मो० बलवद्० नास्ति। ९ मो० कर्म० नास्ति। १०. भा० स्वभावताम्। वस्तुतामित्यपि भवितुमर्हति।

१. ची० एतदनापेक्षितम्। किन्तु न दृश्यते। २. मो० योगे वीर्यम्। ३. मो० नास्ति। ४. ची० प्रत्येक धर्मोऽभिसवक्ष्यते। भाष्ये ऊष्मगत इत्येव। मो० धर्म नास्ति। अत एवं पाठो गृहीतः ५. भा० क्षान्ति-। महाव्युत्पत्तावपि। ६. टी० मो० अन्नोत्तरत्र चैव पाठः प्रतीयते। ची० तत्संप्रयुक्ताश्चधर्माः।

र्थदेशप्रविष्टानुसृतः[7] समाधिः प्रज्ञा संयोगश्च ॥ लौकिकाग्रधर्मः कतमः । प्रत्यात्मं सत्येष्वानन्तर्यचित्तसमाधिः प्रज्ञा संयोगश्च ॥

दर्शनमार्गः कतमः । समासतो लौकिका[Ch. 19b]ग्रधर्मानन्तरमनुपलम्भः समाधिः प्रज्ञा संयोगश्च ॥ समसमालम्ब्यालम्बकज्ञानमपि तत् । [T. 101a] प्रत्यात्ममपनीतसत्त्वसंकेतधर्मसंकेतसर्वतोऽपनीतोभयसंकेतालम्बनधर्मज्ञानमपि तत् ॥

प्रभेदशः पुनर्दर्शनमार्गो लौकिकाग्रधर्मानन्तरं दुःखे धर्मज्ञानक्षान्तिः दुःखे धर्मज्ञानं दुःखेऽन्वयज्ञानक्षान्तिः दुःखेऽन्वयज्ञानं समुदये धर्मज्ञानक्षान्तिः समुदये धर्मज्ञानं समुदयेऽन्वयज्ञानक्षान्तिः समुदयेऽन्वयज्ञानं निरोधे धर्मज्ञानक्षान्तिः निरोधे धर्मज्ञानं निरोधेऽन्वयज्ञानक्षान्तिः निरोधेऽन्वयज्ञानं मार्गे धर्मज्ञानक्षान्तिः मार्गे धर्मज्ञानं मार्गेऽन्वयज्ञानक्षान्तिः मार्गेऽन्वयज्ञानम् ॥ [8]एवंच षोडश ज्ञानक्षान्तिभिर्दर्शनमार्गप्रभेदाः[8] ॥

दुःखं कतमत् । दुःखसत्यम् ॥ दुःखे धर्मः कतमः । दुःखसत्याधिपतेयः शासनधर्मः ॥ धर्मज्ञानं कतमत् । प्रयोगमार्गे [1]सत्याधिपतेयं धर्मविचारणाज्ञानम् ॥ ज्ञानक्षान्तिः कतमा । पूर्वाधिपतिबलविचारणामुपादाय प्रत्यात्मं दुःखसत्ये प्रत्यक्षानुभाविनी अनास्रवा प्रज्ञा । यया प्रज्ञया दुःखदर्शनप्रहातव्यान् [2]सर्वक्लेशान् प्रजहाति । तस्मादुच्यते दुःखे धर्मज्ञानक्षान्तिरिति[3] ॥ दुःखे धर्मज्ञानं कतमत् । क्षान्त्यनन्तरं येन ज्ञानेन पूर्वोक्तेभ्यः क्लेशेभ्यो[4] विमुक्तिं साक्षात्करोति । [5]तस्मादुच्यते दुःखे धर्मज्ञानमिति[5] ॥ दुःखे अन्वयज्ञानक्षान्तिः कतमा । दुःखे धर्मज्ञानक्षान्त्यां दुःखे धर्मज्ञाने च प्रत्यात्मं प्रत्यक्षानुभाविनी अनास्रवा प्रज्ञा उत्पद्यते [6]यदुत्तरमन्वय एव आर्यधर्माणाम्[6] । [7]तस्मादुच्यते दुःखे अन्वयज्ञानक्षान्तिः[7] ॥ दुःखे अन्वयज्ञानं [T. 101b] कतमत् । [8]तदनन्तरमनास्रवं ज्ञानमुत्पद्यते । येन ज्ञानेन दुःखे[9] अन्वयज्ञानक्षान्तिमुपधारयति[10] । [11]तद् दुःखेऽन्वयज्ञानमित्युच्यते[11] ॥ तद्वदन्येषु सत्येषु यथायोग्यम्[12] ॥

---

७. भा० एवं पाठः । महाव्युत्पत्तौ तु तत्त्वार्थैकदेशानुप्रवेशः । ८. ८. भो० एतन्नास्ति ।

१. भो० दुःखा० । भा० दुःखसत्या० । २. भो० सर्व० नास्ति । ३. भो० क्षान्तिर्नास्ति । तत्तु भ्रष्टं प्रतीयते । ४. भो० पूर्वोक्तेभ्यः क्लेशेभ्यः नास्ति । ५ .५. भो० एतन्नास्ति । ६...६. भो० यदुत्तर...धर्माणाम् नास्ति । भाष्यतो गृहीतम् । ७ .७. भो० एतन्नास्ति । ८...८. भो० एतन्नास्ति । ९. भो० नास्ति । १०. भा० प्रत्यनुभवति इति विद्यते । चीने भोटे च धारणार्थको धातुः । ११. ११. भो० एतन्नास्ति । १२. भो० यथायोग्यं नास्ति ।

क्षान्तिर्ज्ञानक्षयो ज्ञेयः। तत्र अवस्थायां[13] धर्मक्षान्तिज्ञानैः ग्राह्यावबोधः। अन्वयक्षान्तिज्ञानैर्ग्राहकावबोधः। अपि च एषु सर्वेषु क्षान्तिज्ञानेषु अनिमित्तप्रेक्षा[14]-विहारी वेदितव्यः॥ इमे षोडश चित्तक्षणा दर्शनमार्ग आख्याताः[15]॥ ज्ञेये ज्ञानोत्पत्ति-परिसमाप्तिरेकश्चित्तलक्षणो वेदितव्यः॥

सर्वं[16] हि मार्गसत्यं चतुर्भिः प्रकारैरनुगन्तव्यम्। व्यवस्थानतः विकल्पनतः अनुभवतः परिपूरितश्च। व्यवस्थानतः कतमत्। यथास्वमधिगमनिष्ठाप्राप्ताः श्रावकादयः। तत्पृष्ठलब्धेन ज्ञानेन प्रापणनिमित्तमप्रमाणैः[17] नामपदव्यञ्जनकायैः मार्गसत्यं व्यवस्थापयन्ति। विकल्पनतः कतमत्। अभिसमयप्रयुक्ता लौकिकेन ज्ञानेन यथाव्यवस्थानं विकल्पयन्तो यदभ्यस्यन्ति॥ अनुभवतः कतमत्। तथाभ्य-स्यन्तो यया (?यदा) दितो दर्शनमार्गाख्यां लोकोत्तरां निष्प्रपञ्चावस्थां प्रत्यात्ममनुभवति॥ परिपूरितः कतमत्। तदूर्ध्वं याभाश्रयपरिवृत्तिं परिपूर्य यावदधिगमनिष्ठां प्राप्नु-वन्ति। तेन पुनरधिगमनिष्ठाप्राप्तास्तत्पृष्ठलब्धेन ज्ञानेन नामपदव्यञ्जनकायैः मार्गसत्यं व्यवस्थापयन्ति॥

यदुक्तं सूत्रे विरजो वीतमलं धर्मेषु धर्मचक्षुरुदपादि इति। तद्दर्शन-मार्गमधिकृत्योक्तम्। तत्र धर्मक्षान्तिभिर्विरजः धर्मज्ञानैर्वीतमलम् परिज्ञया प्रहाणेन मार्गशुद्धिलाभेन च॥[16]

यदुक्तं सूत्रे दृष्टधर्मा प्राप्तधर्मा [1]विदितधर्मा पर्यवगाढधर्मा सर्वैः तीर्णकांक्षः तीर्णविचिकित्सः अपरप्रत्ययः शास्तुः शासनेऽनन्यनेयः धर्मेषु वैशारद्यप्राप्त इति तदपि दर्शनमार्गमधिकृत्योक्तम्। दृष्टधर्मा धर्मक्षान्तिभिः। प्राप्त-धर्मा धर्मज्ञानैः। विदितधर्मा अन्वयक्षान्तिभिः। [T. 1022] पर्यवगाढ-धर्मा अन्वयज्ञानैः। सर्वैः तीर्णकांक्षः स्वाधिगमे क्षान्तिज्ञानैः कांक्षाऽभावेन[2]। तीर्णविचिकित्सः पराधिगमे तदवस्थस्य विमत्यभावेन[3]। अपरप्रत्ययः मार्ग-भावनायां न परतः स्वयं कुशलावर्जनेन[4]। शास्तुः शासनेऽनन्यनेयः [5]बुद्धशासने-

१३. मो॰ अवस्थायां नास्ति। १४. भा॰ प्रेक्षा नास्ति। १५. भो॰ नास्ति। १६...१६. मो॰ संदर्भोऽयं नास्ति। भाष्यतो गृहीतः। १७. भा॰ नास्ति। बहुवचनार्थकं प्रतीयते।

१. भो॰ अनुविदित॰। २. भो॰ क्षान्तिज्ञानैः कांक्षाभावेन नास्ति। ३. भो॰ तदवस्थस्य विमत्यभावेन नास्ति। ४. भो॰ स्वयं कुशलावर्जनेन नास्ति। ५. भो॰ शास्तुः।

न्यतीर्थ्यैरनेयतामुपादाय । धर्मेषु वैशारद्यप्रातः अधिगममारभ्य परिप्रश्नधर्मेषु अलीनचित्तताम् [ Ph. 2 A 5. Ms. 30a ] पादाय ॥

भावनामार्गः कतमः । दर्शनमार्गादूर्ध्वं लौकिको मार्गो लोकोत्तरमार्गः मृदुमार्गो मध्यमार्गोऽधिमात्रो मार्गः प्रयोगमार्गः आनन्तर्यमार्गः विमुक्तिमार्गः विशेषमार्गश्च ॥

*लौकिको मार्गः कतमः ।* लौकिकं प्रथमं ध्यानं द्वितीयं तृतीयं चतुर्थं ध्यानमाकाशानन्त्यायतनं विज्ञानानन्त्यायतनमाकिञ्चन्यायतनं नैवसंज्ञानासंज्ञायतनं च ॥ त एते ध्यानारूप्याः [ Ch 2ca.] संक्लेशव्यवदानव्यवस्थान विशुद्धिभिर्वेदितव्याः ॥ कथं संक्लेशतः । चत्वार्यव्याकृतमूलानि तृष्णा दृष्टिर्मानोऽविद्या च ॥ तृष्णया आस्वाद[7] संक्लेशेन संक्लिश्यते ॥ दृष्ट्या दृष्ट्युत्तरध्यायितया[8] संक्लिश्यते । मानेन मानोत्तरध्यायितया[1] संक्लिश्यते । अविद्यया विचिकित्सोत्तरध्यायितया[2] संक्लिश्यते । तथा च [T. 102b] [3]संक्लिष्टचेतसां रूपारूप्यावचराः क्लेशोपक्लेशाः[4] प्रवर्त्तन्ते ॥ कथं व्यवदानतः । शुद्धका ध्यानारूप्याः कुशलत्वाद् व्यवदाता इत्युच्यन्ते (iii) ॥ कथं व्यवस्थानतः ।[5] अङ्गव्यवस्थानतः समापत्तिव्यवस्थानतः मात्राव्यवस्थानतः संज्ञाकरणव्यवस्थानश्च ॥ कथमङ्गव्यवस्थानतः । प्रथमं ध्यानं पञ्चाङ्गम् । पञ्चाङ्गानि वितर्को विचारः प्रीतिः सुखं चित्तैकाग्रता च ॥ द्वितीयं ध्यानं चतुरङ्गम् । चत्वार्यङ्गानि अध्यात्मसंप्रसादः(iv) प्रीतिः सुखं चित्तैकाग्रता च ॥ तृतीयं ध्यानं पञ्चाङ्गम् । पञ्चाङ्गानि उपेक्षा स्मृतिः संप्रजन्यं सुखं चित्तैकाग्रता च ॥ चतुर्थं ध्यानं चतुरङ्गम् । चत्वार्यङ्गानि उपेक्षापरिशुद्धिः स्मृतिपरिशुद्धिः अदुःखासुखा वेदना चित्तैकाग्रता च ॥ प्रतिपक्षाङ्गमुपादाय अनुशंसाङ्ग(v)मुपादाय तदुभयाश्रयस्वभावाङ्गं चोपादाय आरूप्येष्वङ्गव्यवस्थानं नास्ति । शमथैकरसतामुपादाय ॥ कथं समापत्तिव्यवस्थानतः । सप्तभिर्मनस्कारैः प्रथमं ध्यानं समापद्यते । एवं यावन्नैवसंज्ञानासंज्ञायतनं च ॥ सप्त मनस्काराः कतमे । लक्षणप्रति(vi) [ Ph. 2B5, MS. 30b ]संवेदी मनस्कारः आधिमोक्षिकः [ T. 103 a ] प्राविवेजः[6] रतिसंग्राहकः मीमांसकः प्रयोगनिष्ठः प्रयोगनिष्ठाफलश्च

---

६. ची. चतुर्विधैः संप्रयोगप्रभेदैः इत्यधिकम् । ७. ची. उत्तरध्यायितया इत्यधिकम । ८. ची० क्लेशेन इत्यधिकम ।

१. २. चा० संक्लेशेन इत्यधिकम् । ३. ची० क्लेशस्थावर इत्यधिकम् । ४. ची० संततयः इत्यधिकम् । ५. ची० चत्वारि व्यवस्थानानि इत्यधिकम् । ६. भा० प्रविवेज्य इति ।

मनस्कारः ॥ कथं मात्राव्यवस्थानतः । प्रथमं ध्यानं मृदुपरिभावितं मध्यपरिभावितमधिमात्रपरिभावितञ्च ॥ [ तद्यथा ][7] प्रथमं ध्यानमेवं शिष्टानि ध्यानान्यारूप्याश्च[8] (i)॥ मृदुमध्याधिमात्रपरिभावितस्य प्रथमस्य ध्यानस्य फलं त्रिविधा प्रथमा[9] ध्यानोपपत्तिः । यथा प्रथमस्य ध्यानस्य एवं शिष्टानां ध्यानानां त्रिविधा ध्यानोपपत्तिः[10] । आरूप्येषु स्थानान्तराभावमुपादायोपपत्ति[11]भेदो नास्ति । तत्र मृदुमध्याधिमात्रपरिभावितत्वादारूप्याणा(ii)मुपपत्तावुच्चनीचता हीनप्रणीतता प्रज्ञायते ॥ कथं संज्ञाकरणव्यवस्थानतः । प्रथमध्यानसंगृहीतान्यावतः समाधीन् [2]बुद्धबोधिसत्त्वाः[3] समापद्यन्ते । तेषां[4] श्रावकप्रत्येकबुद्धा नामाभिज्ञा अपि न भवन्ति[5] । यथा प्रथमध्यानसंगृहीतानेयमवशिष्टध्यानसंगृहीतान्युद्दुत ध्यानपारमितां(iii) निश्रित्य ॥ कथं विशुद्धितः । प्रान्तकोटिकं प्रथमं ध्यानं यावन्नैव संज्ञानासंज्ञायतनं[6] विशुद्धिरित्युच्यते ॥

लोकोत्तरो मार्गः कतमः । भावनामार्गे दुःखसमुदयनिरोधमार्गज्ञानानि धर्मज्ञानान्वयपक्ष्याणि तैश्च [ T. 103b ] संप्रयुक्तः समाधिः [7]प्रथमं वा ध्यानं यावदाकिञ्चन्यायतनं [8] (iv) नैवसंज्ञानासंज्ञायतनं लौकिकमेव अपरिस्फुटं संज्ञाप्रचारतामुपादाय । तत[9] आनिमित्तमित्युच्यते ॥ यथोक्तं भगवता यावदेव संज्ञासमापत्तिः तावदाज्ञा[10]प्रतिवेध इति । निरोधसमापत्तिर्लोकोत्तरा [11]मनुष्येष्वभिनिर्ह्रियते । मनुष्येष्व[12]भिनिर्हृता मनुष्येषु[13]रूपधातौ वा संमुखी(v)क्रियते । आरूप्येष्व[14]स्याः संमुखीभावो नास्ति । शान्तविमोक्षविपाकविहारिणां[15] तद्यत्नानारम्भतामुपादाय ॥

---

७. चीं० मनस्कार इति प्रत्येकमावृत्यते । ८. चीं० त्रिमात्रा परिभाविनाः इत्यधिकम् । ९. प्रथम० इत्युचित प्रतीयते । १०. चीं० भावनाफलो० ११. चीं० अवस्थोपपत्तिफलस्थानभेदो० ।

१. चीं० त्रिमात्रापरिभावितत्वादारूप्यसमापत्तेः तत्फलोपपत्तिकाले इत्यधिकम् । २. चीं० भगवानित्यधिकम् । ३. चीं० पारमिप्राप्ता महाप्रभावा महासत्त्वा इत्यधिकम् । ४. चीं० समाधीनाम् इत्यधिकम् । ५. चीं० कुतः संख्याभिज्ञाः किं पुनः समापत्तेः इत्यधिकम् । भाष्ये त्वेवं दृश्यते यावतः प्रथमध्यानसंगृहीतान् समाधीन् बुद्धा भगवन्तो बोधिसत्त्वाश्च महाप्रभावप्राप्ताः समापद्यन्ते । तेषां समाधीनां श्रावकाः प्रत्येकबुद्धाश्च नामान्यपि न जानन्ति । कुत एवैषां सङ्ख्यां ज्ञास्यन्ति समापत्स्यन्ते । ६. चीं० प्रान्तकोटिकमित्यधिकम् । ७. चीं० असमापत्तिपरिगृहीतम् इत्यधिकम् । भा० अनागम्यसंगृहीतम । ८. चीं० परिगृहीतमित्यधिकम् । ९. चीं० मार्गयुक्तेः । १०. चीं० सत्याभिज्ञा । ११. चीं० आर्यमार्गपृष्ठलब्धेषु इत्यधिकम् । १२. १३. चीं० गतिषु इत्यधिकम् । १४. चीं० धातुषु भूयो इत्यधिकम् ।

मृदुमार्गः कतमः । मृदुमृदुर्मृदुमध्यो मृद्वधिमात्रश्च[16] येन[17] त्रैधातुकावचराणां क्लेशानां भूमौ भूमावधिमात्राधिमात्रमधिमात्रमध्यमधिमात्रमृदुं क्लेश[18]-प्रकारं प्रज (vi) [ Ph. 2A4. MS. 31a ] हाति ॥

मध्यो मार्गः कतमः । मध्यमृदुर्मध्यमध्यो मध्याधिमात्रश्च[19] येन त्रैधातुकावचराणां क्लेशानां भूमौ भूमौ[20] मध्याधिमात्रं मध्यमध्यं मध्यमृदुं क्लेशप्रकारं[21] प्रजहाति ॥

अधिमात्रो मार्गः कतमः । अधिमात्रमृदुरधिमात्रमध्योऽधिमात्राधिमात्रश्च[1] येन त्रैधातुकावचराणां क्लेशानां(i) भूमौ भूमौ मृद्वधिमात्रं मृदुमध्यं मृदुमृदुं [2]क्लेशप्रकारं प्रजहाति ॥

प्रयोगमार्गः कतमः । येन क्लेशं प्रजहाति[3] ॥ आनन्तर्यमार्गः कतमः । यस्या[ Ch. 10b ]नन्तरं निरन्तरः क्लेशः प्रहीणो भवति[4] ॥ विमुक्तिमार्गः कतमः । येन प्रहीणे क्लेशे विमुक्तिं साक्षात्करोति ॥ [ T. 1042 ] विशेषमार्गः(ii) कतमः । [5]तदन्यस्य क्लेशप्रकारस्य प्रयोगानन्तर्यविमुक्तिमार्गाः विशेषमार्गः[6] । अपि खलु क्लेशप्रहाणप्रयोगं निराकृत्य धर्मचिन्तायां वा[7] प्रयुक्तस्य धर्मविहारे वा समापत्तिविशेषे वा यो मार्गः । अपि खलु वैशेषिकान् गुणानभिनिर्हरतो[8] वा यो मार्गः ॥

मार्गभावना(iii) कतमा । प्रतिलंभभावना निषेवणभावना निर्धावनभावना[9] प्रतिपक्षभावना च ॥ प्रतिलम्भभावना कतमा । अनुत्पन्नानां कुशलानां धर्माणामुत्पादाय या भावना ॥ निषेवणभावना कतमा । उत्पन्नानां कुशलानां धर्माणां [10]स्थितये असंमोषाय भूयोभावाय वृद्धिविपुलतायै(iv) या भावना ॥ निर्धावनभावना कतमा । उत्पन्नानां पापकानामकुशलानां धर्माणां प्रहाणाय या भावना ॥ प्रतिपक्षभावना कतमा । अनुत्पन्नानां पापकानामकुशलानां धर्माणामनुत्पादाय

---

१५. ची० निरोधसमापत्तिः इत्यधिकम् । १६. ची० मार्गः इत्यधिकम् । १७. ची० मार्गेण इत्यधिकम् । १८. ची० त्रि० । १९. ची० मार्ग इत्यधिकम् । २०. ची० मध्ये इत्यधिकम् । २१. ची० त्रि० इत्यधिकम् ।

१. ची० मार्ग इत्यधिकम् । २. भा० ची० त्रिमात्रं इत्यधिकम् । ३. ची० स भावनामार्गो प्रयोगमार्ग इत्युच्यते । इत्यधिकम् । ४. ची० नावशिष्यते इत्यधिकम् । ५. ची० प्रहीणा० ६. ची० इत्युच्यते । ७. मू० क इति प्रमादः । ८. ची० भा० तैर्वा विहरतः इत्यधिकम् । ९. भा० निधावन निर्धावन इत्युभय दृश्यते । १०. ची० दृढस्थितये । ११. भा० अव० नास्ति ।

या भावना ॥ अपि खलु मार्ग उत्पद्यमानः स्वां वासनामव[11]स्थापयति सा प्रतिलम्भ(v)भावना । स[12]एव संमुखीभूतो भावनां गच्छति सा निषेवणभावना । [13]स्वमावरणं विजहाति सा निर्धावनभावना । [14]विहीन[15]श्चावरणमायत्यामनुत्पत्तिधर्मतायामवस्थापयति सा प्रतिपक्षभावना ॥ अपि खलु चतुर्विधः प्रतिपक्षः । विदूषणाप्रतिपक्षः प्रहाणप्रतिपक्षः (vi) आधारप्रतिपक्षः दूरीभावप्रतिपक्षश्च प्रतिपक्षभावनेत्युच्यते ॥ विदूषणाप्रतिपक्षः कतमः । [T. 104b] सास्रवेषु संस्कारेष्वादीनवदर्शनम् ॥ प्रहाणप्रतिपक्षः कतमः । प्रयोगानन्तर्यमार्गः ॥ आधारप्रतिपक्षः कतमः । विमुक्तिमार्गः ॥ दूरीभावप्रतिपक्षः कतमः । तदु(vii) [Ph. 2 B 4, MS 31b] परिमो मार्गः ॥

अपि खलु वस्तुपरीक्षामार्गः व्यावसायिको मार्गः समाधिपरिकर्ममार्गः अभिसमयप्रायोगिको मार्गः अभिसमयश्लिष्टो मार्गः अभिसमयमार्गः विशुद्धिनैर्याणिको मार्गः निश्चयेन्द्रियभिन्नो[1] मार्गः शिक्षात्रयपरिशोधनो मार्गः सर्वगुणनिर्हारको मार्गः(i) मार्गसंग्रहमार्गश्च मार्ग इत्युच्यते ॥ स पुनरेष यथाक्रमं सप्तत्रिंशद्बोधिपक्षा धर्माः चतस्रः प्रतिपदः चत्वारि धर्मपदानि शमथ(ो) विपश्यना त्रीणि [2]चेन्द्रियाणि ॥

[3]स्मृत्युपस्थानानामालम्बनं स्वभावः सहायः भावना भावनाफलञ्च वेदितव्यम् । यथा स्मृत्युपस्थानानामेवमवशिष्टानां बोधिपक्षाणाम् ॥ स्मृत्युपस्थानानामालम्बनं कतमत् । कायो वेदना चित्तं धर्माः ॥ अपि खल्वात्माश्रयवस्तु आत्मोपभोगवस्तु आत्मवस्तु आत्मसंक्लेशव्यवदानवस्तु च ॥ स्वभावः कतमः । प्रज्ञा स्मृतिश्च ॥ सहायः कतमः । तत्संप्रयुक्ताश्चित्तचैत(ii) सिका धर्माः ॥ भावना कतमा । अध्यात्मं कायादिषु कायाद्यनुपश्यना ॥ यथा अध्यात्ममेवं बहिर्धा अध्यात्मबहिर्धा ॥ अध्यात्मं [T. 105a] कायः कतमः । यान्यस्मिन् काये आध्यात्मिकानि रूपीण्यायतनानि ॥ बहिर्धाकायः कतमः । बहिर्धा[4] रूपीण्यायतनानि ॥ अध्यात्मबहिर्द्धा(iv) कायः कतमः । आध्यात्मिकायनन

---

ची. प्रथम्मयति । १२. ची० मार्ग इत्यधिकम् । १३. ची. स एव मार्गः समुखीभूत इत्यधिकम् । १४. चो. स एव मार्ग इत्यधिकम् । १५. ची. स्वा० ।

१. भा निश्चये० । २. ची० अनास्रवाणि इत्यधिकम् । ३. ची. पुनर्बोधिपक्षाणां धर्माणां पञ्चभिः प्रकारैर्व्यवस्थानं वेदितव्यम् इत्यधिकम् । स्मृत्युपस्थानानाम् इति नास्ति । यथा स्मृत्यु . बोधिपक्षाणाम् इत्यपि नास्ति । ४. ची बहिर्द्धा यानि इत्यधिकम् ।

संघस्थानि बाह्यान्यायतनानि। इन्द्रियाधिष्ठानानि पारसान्तानिकानि चाध्यात्मिकानि रूपाण्यायतनानि ॥ काये कायानुपश्यना कतमा। या विकल्पप्रतिबिम्बकायेन प्रकृतिबिम्बकायस्य समतापश्यना ॥ अध्यात्मं वेदना कतमा। अध्यात्मं[i] कायमुपादायोत्पन्ना वेदना ॥ बहिर्धा वेदना कतमा। बहिर्धा कायमुपादायोत्पन्ना वेदना ॥ अध्यात्मबहिर्धा वेदना कतमा। अध्यात्मम्बहिर्धाकायमुपादायोत्पन्ना वेदना ॥ यथा वेदना एवं चित्तं धर्माः ॥ यथा काये कायानुपश्यना एवं वेदनादिषु वेदनाद्यनुपश्यना [ii] यथायोगं वेदितव्याः ॥ अपि खलु भावना छन्दो वीर्यं व्यायाम उत्साहः उत्सूढिरप्रतिवाणिः स्मृतिः संप्रजन्यं अप्रमादश्च[5] ॥ छन्द-भावना अमनसिकारोपक्लेशप्रतिपक्षेण। वीर्यभावना कौसीद्योपक्लेशप्रतिपक्षेण। *व्यायामभावना लयौद्धत्योपक्लेशप्रतिपक्षे*[iii]ण ॥ उत्साहभावना चेतसोऽलीनत्वो-पक्लेशप्रतिपक्षेण ॥ उत्सूढिभावना विपादपरिस्रवपरिखेदोपक्लेशप्रतिपक्षेण ॥ अप्रतिवाणिभावना कुशलपक्षेण अल्पमात्र[1] संतुष्ट्युपक्लेशप्रतिपक्षेण[2] ॥ स्मृति-[ T. 105b ]भावना भगवतः[3] शासने संमोषोपक्लेशप्रतिपक्षेण ॥ संप्रजन्य-भावना आपत्तिविप्रतिसारोपक्लेशप्रतिपक्षेण ॥ अप्रमादभावना कुशलेषु[4] निक्षिप्त-धुरत्वोपक्लेशप्रतिपक्षेण ॥ भावनाफलं कतमत्। चतु[5] विपर्यासप्रहाणं चतुः[5]-सत्यावतारः कायादिविसंयोगः ॥

चतुः[5] सम्यक्प्रहाणानामालम्बनं कतमत्। उत्पन्नानुत्पन्नविपक्षप्रतिपक्षाः ॥ स्वभावः कतमः। व्यायामः ॥ सहायः कतमः। तत्संप्रयुक्ताश्चित्तचैतसिका धर्माः ॥ भावना कतमा। तदुक्तं सूत्रे[6] छन्दं जनयति *व्यायच्छते* वीर्यमारभते चित्तं प्रगृह्णाति चित्तं[7] प्रदधाति। इत्येवमादिभिः पदैस्तत्र[ Ch. 21a ]वीर्या-श्रयभावना परिदीपिता ॥ आश्रयः छन्दः। वीर्यमुद्योगः। शमथप्रग्रहोपेक्षानिमि-त्तमनसिकारेषु छन्दं (जनयति) *लयौद्धत्यापकर्षणे* वीर्यमारभते[9] एवं तदनन्तरं

५. ची. भावनाप्रभेदतः इत्यधिकम्।

१. भो० अल्पमात्र० नास्ति।

२. ची० आक्षरिकानुवादस्तु अल्पमात्रकुशलधर्मोत्पत्तिलाभे संतुष्ट्यु०। भाष्ये तु अल्पमात्र सन्तुष्टिः। आलये तावता कुशलपक्षेण इति दृश्यते। अत एवमनूदितम्। ३. भो० नास्ति। ४. भो० नास्ति। ५. चतुः नास्ति। ६. भो० यदुक्तं सूत्रे नास्ति। ७. ची० चित्तमधिकं प्रतीयते। ८. ची० जनयति नास्ति। किन्त्वपेक्षितं प्रतीयते। भो० वीर्यमारभते। तदपि विचारणीयम्। ९. भो० आरभते नास्ति व्यायच्छते इति प्रतीयते।

चित्तं प्रगृह्णाति प्रदधातीत्युच्यते॥ भावना[10]फलं कतमत्। अशेषविपक्षहानिः प्रतिपक्षप्रतिलम्भः प्रतिपक्षवृद्धिश्च॥ तदु[11]च्यते भावनाफलम्[11]।

चतु[12]र्ऋद्धिपादानामालम्बनं कतमत्। निष्पन्नेन समाधिना यत्करणीयं कृत्यम्॥ स्वभावः कतमः। समाधिः॥ सहायः कतमः। छन्दोवीर्यं चित्तं मीमांसा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः॥ छन्दसमाधिः कतमः। यत्सत्कृत्य प्रयोगमागम्य स्पृशति चित्तस्यैकाग्रताम्॥ वीर्यसमाधिः कतमः। यत्सातत्य[13]प्रयोगमागम्य स्पृशति चित्तस्यैकाग्रताम्॥ चित्तसमाधिः कतमः। पूर्वसमाधिभावनामागम्य स्वरसेन[14] स्पृशति चित्तस्यैकाग्रताम्॥ [T. 1062] मीमांसासमाधिः कतमः। देशनाधर्मश्रवणमागम्य प्रत्यात्मं प्रतिसंख्याय स्पृशति चित्तस्यैकाग्रताम्॥ पुनः छन्दसमाधिः यत् छन्दं जनयन् स्पृशति चित्तस्यैकाग्रताम्॥ वीर्यसमाधिः यत् वीर्यमारभमाणः स्पृशति चित्तस्यैकाग्रताम्॥ चित्तसमाधिः यत् चित्तं प्रदधत् स्पृशति चित्तस्यैकाग्रताम्॥ मीमांसासमाधिः यत् चित्तं प्रगृह्णन् स्पृशति चित्तस्यैकाग्रताम्॥ भावना कतमा। अष्टानां प्रहाणसंस्काराणामभ्यासः। कतमे अष्टौ[1]। छन्दः व्यायामः श्रद्धा प्रश्रब्धिः स्मृतिः संप्रजन्यं चेतना उपेक्षा च। ते पुनरष्टौ समासतश्चतुर्धा संगृह्यन्ते[2]। व्यावसायिकः अनुग्राहकः औपनिबन्धिकः प्रातिपक्षिकश्च॥ छन्दवीर्यचित्तमीमांसाभावना पुनर्द्विविधा। निदान[3] संक्षेपविक्षेप[4] परिवर्जनभावना अलीनत्वाविक्षेपतदुभयाश्रयानुकूलभावना च॥ फलं कतमत्। [5]कुशलसमाधिपरिकर्मतः यथाकामं धर्माभिज्ञा यथाचित्तमभिज्ञाप्रदर्शनम्। अपि च तेषु तेषु धर्मेषु अधिगमः प्रातिः कर्मण्यता वशिता कारित्रं यथेष्टं नानाविधानामृद्ध्यादीनां वस्तूनां निष्पादनमधिगुणानां निर्हारश्च[5]॥

---

१०. मो० भावना० नास्ति। ११ ११ मो० एतन्नास्ति १२. मो० चतुर नास्ति। १३. चो० आक्षरिकानुवादस्तु निरन्तरं। १४. चो. आक्षरिकानुवाद भूमिबलेन।

१. मो० अष्टौप्रहाणसस्कारास्तु। २. भा० क्रियन्ते। ३. मो० निदान० नास्ति। ४. मो० चतुर्विक्षेप०। ५ . ५ मो० अनुवादस्त्वेव प्रतीयते—कुशलसमाधिपरिकर्मतो धर्माभिज्ञा। यत्र यत्राभिज्ञाप्रदर्शनाभिलापः तत्र च चित्ताधिगमः स्वस्वस्थानीयधर्मेषु चाभिमुक्तेर्भागिनो भवन्ति। भाष्ये ऋद्ध्यधिगुणनिष्पादनम् इति दृश्यते सम्भवतो यस्य व्याख्या ऋद्ध्यादीना वस्तूना निष्पादनमधिगुणानां निर्हारश्च इति।

[6]पञ्चेन्द्रियाणामालम्बनं कतमत्। चत्वार्यार्यसत्यानि ॥ स्वभावः कतमः। श्रद्धा वीर्यं[7] स्मृतिः समाधिः प्रज्ञा च ॥ सहाय कतमः। तत्संप्रयुक्ताश्चित्तचैतसिका धर्माः ॥ [T. 106b] भावना कतमा। यत् श्रद्धेन्द्रियेण सत्येषु अभिसंप्रत्ययसमुत्थानं[8] प्रयोगभावना। वीर्येन्द्रियेण सत्येषु उत्पन्नाभिसंप्रत्ययस्याभिसंबोध्यर्थं व्यायामसमुत्थानप्रयोगभावना। स्मृतीन्द्रियेण सत्येषु आरब्धवीर्यस्य स्मृतिसंप्रयोगा[9] धर्मसंमोषसमुत्थानप्रयोगभावना। समाधीन्द्रियेण सत्येषु संप्रयुक्त[10]स्मृतेः चित्तैकाग्रतासमुत्थानप्रयोगभावना। प्रज्ञेन्द्रियेण सत्येषु समाहितचित्तस्य प्रविचयसमुत्थानप्रयोगभावना ॥ भावना[11]फलं कतमत्। सत्याभिसमयसमुत्थानतः ऊष्मगतमूर्धपरिकर्मतश्च क्षान्तिलौकिकाग्रधर्मनिर्हारः ॥

यथा पञ्चेन्द्रियाणि तथा पञ्च बलानि। एषां विशेषः तैः विपक्षान्तरायनिर्लेखोऽनवमृद्यतेति बलानीत्युच्यन्ते[1] ॥

सप्त[2] बोध्यङ्गानामालम्बनं कतमत्। चतुर्णामार्यसत्यानां यथाभूतता ॥ स्वभावः कतमः। स्मृतिः धर्मविचयः वीर्यं प्रीतिः प्रश्रब्धिः समाधिः उपेक्षा च ॥ स्मृतिः संनिश्रयाङ्गम्। धर्मविचयः स्वभावाङ्गम्। वीर्यं निर्याणाङ्गम्। प्रीतिः अनुशंसाङ्गम्। प्रश्रब्धिः समाधिः उपेक्षा चासंक्लेशाङ्गम्। असंक्लेशतः असंक्लेशाश्रयतः असंक्लेशस्वभावतश्च[3] ॥ सहायः कतमः। तत्संप्रयुक्ताश्चित्तचैतसिका धर्माः ॥ भावना कतमा। विवेकनिश्रितं विरागनिश्रितं निरोधनिश्रितं व्यवसर्गपरिणतं स्मृतिसंबोध्यङ्गम् [T. 107a]। यथा स्मृतिसंबोध्यङ्गं तथा यावत् उपेक्षासंबोध्यङ्गम् ॥ एभिः चतुर्भिः पदैर्यथाक्रमं चतुःसत्यालम्बनाबोध्यङ्गभावना परिदीपिता ॥ भावनाफलं[6] कतमत्। दर्शनहेयानां क्लेशानां प्रहाणम् ॥

अष्टानामार्यमार्गाङ्गानामालम्बनं कतमत्। तदुत्तरकालं चतुर्णामार्यसत्यानां यथाभूतता ॥ स्वभावः कतमः[7]। सम्यग्दृष्टिः सम्यक्कर्मान्तः सम्यगाजीवः सम्यग्व्यायामः सम्यक्स्मृतिः सम्यक्समाधिश्च ॥ सम्यग्दृष्टिः परिच्छेदाङ्गम्।

६. भो० पञ्च० नास्ति। ७. व्यायामार्थकः शब्द। ८. भो० समुत्थान० नास्ति। ९. भो० स्मृत्युपस्थाना० १०. भो० उपस्थित०। ११. भो० भावना० नास्ति।

१. भो० पञ्च नास्ति। २ भो० नास्ति। ३. भो नास्ति। ४. भो येनासंक्लेशः यत्रासंक्लेश यश्चासंक्लेशः। महायानसूत्रालंकारे तु "येन यन्निश्रित्य योऽसक्लेश इति त्रिविधमसक्लेशाङ्गवेदितव्यम्" इति। ५. भो० चतुर्भिः पदैर्यथाक्रमं नास्ति। ६. भो० भावना० नास्ति। ७. भो० अष्टानां नास्ति। ८. भो० अष्टाङ्गानि इत्यधिकम्। ९. भो० भावना० नास्ति।

सम्यक्संकल्पः परसंप्रापणाङ्गम् । सम्यग्वाक्कर्मान्ताजीवाः परसंप्रत्ययाङ्गम् । दर्शनशीलाजीवविशुद्धितामुपादाय । सम्यग्व्यायामः क्लेशावरणविशोधनाङ्गम् । सम्यक्समाधिः वैशेषिकगुणावरण विशोधनाङ्गम् ॥ सहायः कतमः । तत्संप्रयुक्ताश्चित्तचैतसिकाधर्माः ॥ भावना कतमा । भावना तु बोध्यङ्गवत् ॥ भावना[3] फलं कतमत् । परिच्छेदः परसंप्रापणं परसंप्रत्ययः [T. 107b] क्लेशावरणविशोधनमुपक्लेशावरणविशोधनं वैशेषिकगुणावरणविशोधनं च ॥

चतस्रः प्रतिपदः कतमाः । दुःखा प्रतिपद् धन्धाभिज्ञा दुःखा प्रतिपत् क्षिप्राभिज्ञा सुखा प्रतिपद् धन्धाभिज्ञा सुखा प्रतिपत् क्षिप्राभिज्ञा ॥ प्रथमा मृद्विन्द्रियाणामनुपलब्धमौलध्यानम् । द्वितीया तीक्ष्णेन्द्रियाणामनुपलब्धमौलध्यानम् । तृतीया मृद्विन्द्रियाणामुपलब्धमौलध्यानम् । चतुर्थी तीक्ष्णेन्द्रियाणामुपलब्धमौल[ Ch. 21b ]ध्यानम् ॥

चत्वारि धर्मपदानि कतमानि । अलोभाद्वेषाणां सम्यक् स्मृतिः सम्यक् समाधिः । अलोभाद्वेषाणामधिशीलशिक्षाविशुद्धिः । सम्यक्स्मृतानामधिचित्तशिक्षाविशुद्धिः । सम्यक्समाहितानामधिप्रज्ञशिक्षाविशुद्धिः ॥

शमथः कतमः । अध्यात्मं चित्तस्य उपनिबन्धः स्थापना संस्थापना अवस्थापना उपस्थापना दमनं शमनं व्युपशमनम् एकोतीकरणं समाधानं च ॥ विपश्यना कतमा । या धर्मान् विचिनोति प्रविचिनोति परिवितर्कयति परिमीमांसामापद्यते[1] च । काम[2] प्रतिपक्षदौष्ठुल्यनिमित्तसंयोजनतः कामाभिभवानां विपर्यासतः अविपर्यस्तचित्तस्यावस्थापनतश्च ॥ अपि खलु शमथविपश्यनामागम्य चत्वारो मार्गाः । एकत्यः शमथस्य लाभी न विपश्यनायाः । तत्प्रकारं शमथं निश्रित्य विपश्यनाभावना । एकत्यः विपश्यनाया [ T. 108a ] लाभी न शमथस्य । तत्प्रकारां विपश्यनां निश्रित्य शमथभावना । एकत्यः न शमथस्य लाभी नापि विपश्यनायाः । तत्संबद्धचित्तस्य लयो[3] द्धत्यापकर्षणाद् युगपदुभयमार्ग[4] भावना । एकत्यः शमथस्य लाभी विपश्यनायाश्च । तस्य शमथविपश्यनोभयमार्ग[5] युक्तस्य समं युगपत् प्रवृत्तिः ॥

त्रीणीन्द्रियाणि । अज्ञातमाज्ञास्यामीन्द्रियम् आज्ञेन्द्रियम् आज्ञातावीन्द्रियं[6]

---

१. भो० परिमीमांसते । पाठोऽयमाप्यतो गृहीतः । २. भो० काम० नास्ति । ३. भो० लय० नास्ति । ४. भो० मार्ग नास्ति । ५. भो० उभयमार्ग नास्ति । ६. भो० आज्ञातेन्द्रियमिति प्रतीयते ।

च॥ अज्ञातमाज्ञास्यामीन्द्रियं कतमत्। प्रयोगमार्गे पञ्चदशसु च दर्शनमार्गचित्तक्षणेषु यदिन्द्रियम्॥ आज्ञेन्द्रियं कतमत्। षोडशात् दर्शनमार्गचित्तक्षणादूर्ध्वं सर्वस्मिन् शैक्षमार्गे यदिन्द्रियम्॥ आज्ञातावीन्द्रियं कतमत्। अशैक्षमार्गेयदिन्द्रियम्॥

प्रथमध्यानभूमिकानां भावनामार्गे कामावचराणि कुशलमूलकान्यपि भावनां गच्छन्ति। तेषु विभुत्वलाभतः। यथा प्रथमध्यानभूमिकानां कामावचराणि कुशलमूलकानि भावनां गच्छन्ति तथा सर्वेषामूर्ध्वभूमिकानां भावनामार्गे अधोभूमिकानि कुशलमूलकानि भावनां गच्छन्ति। तेषु विभुत्वलाभतः॥

निष्ठामार्गः कतमः। वज्रोपमः समाधिः। सर्वदौष्ठुल्यानां प्रतिप्रश्रब्धेः सर्वसंयोगानां प्रहाणात् सर्वविसंयोगानामधिगमाच्च। तदनन्तरं निरन्तराश्रयप्रवृत्तिः प्राप्त[1] क्षयज्ञानम् अनुत्पादज्ञानं दशाशैक्षा धर्माः। कतमे दश[2]। अशैक्षस्य सम्यग्दृष्टिर्यावद [T. 108b] शैक्षस्य सम्यक्समाधिः अशैक्षस्य सम्यग्विमोक्षः अशैक्षस्य सम्यग् ज्ञानं च॥ ए[3] धमादयो धर्मा निष्ठामार्ग उच्यते[3]॥ कतमानि सर्वदौष्ठुल्यानि। सं[4] क्षेपतश्चतुर्विंशतिः[4]। तद्यथा सर्वत्रगमभिलापदौष्ठुल्यं वेदितदौष्ठुल्यं क्लेशदौष्ठुल्यं कर्मदौष्ठुल्यं विपाकदौष्ठुल्यं क्लेशावरणदौष्ठुल्यं[5] कर्मावरणदौष्ठुल्यं विपाकावरणदौष्ठुल्यं निवरणदौष्ठुल्यं वितर्कदौष्ठुल्यं आहारदौष्ठुल्यं मैथुनदौष्ठुल्यं स्वप्नदौष्ठुल्यं व्याधिदैष्ठुल्यं जरादौष्ठुल्यं मरणदौष्ठुल्यं परिश्रमदौष्ठुल्यं दृढदौष्ठुल्यम् औदारिकदौष्ठुल्यं मध्यदौष्ठुल्यं सूक्ष्मदौष्ठुल्यं[6] समापत्त्यावरणदौष्ठुल्यं ज्ञेयावरणदौष्ठुल्यं च॥ संयोगः कतमः। दौष्ठुल्याचितेषु संयोगलाभतेति विज्ञप्तिः॥ विसंयोगः कतमः। दौष्ठुल्यविक्षिप्तेषु विसंयोगलाभतेति विज्ञप्तिः॥ वज्रोपमः समाधिः कतमः। भा[7] वनामार्गगतस्य तदुत्तरं संयोजनप्रहाणमार्गावस्थायां यः समाधिः[7] प्रयोगमार्गसंग्रहो वा आनन्तर्यमार्गसंग्रहो वा। प्रयोगमार्गसंग्रहस्तु ततः परं सर्वैरावरणैरच्छाद्यः सर्वावरणानां च भेदक इति॥ आनन्तर्यमार्गसंग्रहस्तु यदनन्तरं क्षयज्ञानानुत्पादज्ञानोत्पत्तिः। स च समाधिः निरन्तरः दृढः एकरसः व्यापी च॥ एतदर्थप्रतिबिम्बना[8] र्थं [T. 109a]

१. मो० प्राप्त० नास्ति। २. भो० कतमे दश नास्ति। ३ ३. मो० एतद् वाक्य नास्ति। ४ ४. मो० एतन्नास्ति। ५ ६. एतद् द्विरागच्छति। भाष्ये त्वेवं व्याख्यातं। प्रथमं तीव्रायतक्लेशतेति (84a) द्वितीयं श्रावकप्रत्येकबुद्धबोधिपक्षः इति। ७...७. मो० एतद् वाक्यं नास्ति। ८. मो० एतदभिसंधाय अयं पाठो भाष्यतो गृहीतः।

भगवतोक्तं तद्यथा महाशैलपर्वतोऽखण्डोऽच्छिद्रोऽशुषिर एकघनः सुसंवृत्तो दशदिग्वाताकम्प्यश्च[1] ॥ कतमा नाम[2] निरन्तराश्रयप्रवृत्तिः । अशैक्षमार्गलाभिनः [3]त्रिविधा आश्रयप्रवृत्तिः । कतमास्तिस्रः[3] । चित्ताश्रयप्रवृत्तिः मार्गाश्रयप्रवृत्तिः दौष्ठुल्याश्रयप्रवृत्तिश्च ॥ क्षयज्ञानं कतमत् । हेतुक्षयेण यद् ज्ञानं लभ्यते क्षयविषया[4] लम्बनं वा ॥ अनुत्पादज्ञानं कतमत् । फलप्रहाणेन यद् ज्ञानं लभ्यते फलानुत्पत्तिविषयालम्बनं[4] वा ॥ दशाशैक्षा धर्मास्तु अशैक्षाणां[5] शीलस्कन्धं समाधिस्कन्धं प्रज्ञास्कन्धं विमुक्तिस्कन्धं विमुक्तिज्ञानदर्शनस्कन्धं चाधिकृत्य वेदितव्याः ॥

तथा च मार्गसत्यस्य चत्वारः प्रकारभेदाः । मार्गलक्षणं न्यायलक्षणं प्रतिपल्लक्षणं नैर्याणिकलक्षणं च ॥ किमुपादाय[5] मार्गलक्षणम् । तत्त्वार्थपरिमार्गणतामुपादाय ॥ किमुपादाय न्यायलक्षणम् । क्लेशप्रतिपक्षतामुपादाय ॥ [ Ch. 22a ] किमुपादाय प्रतिपल्लक्षणम् । चित्ताविपर्यासप्रतिपादनतामुपादाय ॥ किमुपादाय नैर्याणिकलक्षणम् । नित्यपदयानतामुपादाय ॥

सत्येषु षोडशाकाराः लौकिका लोकोत्तराश्च ॥ लौकिकानां लोकोत्तराणां च कतमः प्रभेदः । ज्ञेये [ T. 109b ] अकुशलप्रवेशकुशलप्रवेशस्वभावप्रभेदतः सावरणनिरावरणस्वभावप्रभेदतः सविकल्पनिर्विकल्पस्वभावप्रभेदतश्च[7] ॥ [8]केन हेतुना सत्येषु अनित्यदुःखादयः षोडश लौकिकाकाराः । तथताया अप्रतिवेधतः क्लेशानुशयतः अभिलापमुखेन प्रपञ्चनतश्च ॥ लोकोत्तराकाराः तद्विपर्ययेण[8] ॥ लोकोत्तराकारेषु वर्त्तमानो[9] ऽनित्यार्थं पश्यति साक्षादनुभवति[10] नोत्वनित्यं[11] पश्यति अभिलापप्रपञ्चमुखेन[12] । यथा अनित्याकारा[13] अनित्यार्थे[14] एवं शिष्टाकाराः शिष्टार्थेषु[15] यथायोगं वेदितव्याः ॥

---

१. मो० पूर्वदिग्वाताकम्प्यः । यथा पूर्वदिग् तथा सर्वदिग्वाताकम्प्यः । २. मो० नास्ति । ३...३. मो० त्रिविधा --- स्तिस्रः नास्ति । ४. मो० विषय० नास्ति । ५. मो० नास्ति । ६. मो० उच्यते इत्यधिकम् । ७. मोटानुवादस्त्वेवम्—ज्ञेये अकुशलप्रवेशं कुशलप्रवेशं सावरणं निरावरणं सविकल्पं निर्विकल्पं चोपादाय एष प्रभेदः । ८...८. मो० केन हेतुना --- तद्विपर्ययेण इति यावत् नास्ति । ९. मो० अवतीर्णः । १०. मो० साक्षादनुभवति नास्ति । ११. पाठोऽयं भाष्यतो गृहीतः मोः अनित्यता । ची० अनित्यार्थं । १२. मो० नास्ति । १३. मो० अनित्यता । १४. मो० नास्ति । १५. मो० नास्ति ।

(अथ विनिश्चये धर्मपरिच्छेदो द्वितीयो भागः।)[1]

धर्मविनिश्चयः कतमः। आर्यशासनं द्वादशाङ्गधर्मः। कतमानि द्वादशाङ्गानि[2]। सूत्रं गेयं व्याकरणं गाथा उदानं निदानम् अवदानम् इतिवृत्तकं जातकं वैपुल्यम् अद्भुतधर्मः उपदेशश्च॥

सूत्रं कतमत्। यदभिप्रेतार्थं सूचनाकारेण गद्यभाषितम्। दशानुशंसान् संपश्यन् तथागतः सूचनाकारेण धर्मं देशयति सुखं व्यवस्थापयति सुखं देशयति। श्रोतापि[3] सुखमुद्गृह्णाति धर्मगौरवतया क्षिप्रं बोधि[4] संभारान् परिपूरयति आशुधर्मतां प्रतिविध्यति। बुद्धेऽवेत्यप्रसादं लभते धर्मे संघे चावेत्य प्रसादं लभते। परमदृष्टधर्मसुखविहारं स्पृशति। सांकथ्यविनिश्चयेन सतां चित्तमाराधयति। पण्डितः पण्डित इति संख्यां गच्छति॥

गेयं कतमत्। सूत्राणां मध्ये वा अन्ते वा गाथया यद् गीयते। सूत्रेषु अनिरूपितोऽर्थो वा यद् [T. 1102] व्याख्यायते। अतो गेयमित्युच्यते॥

व्याकरणं कतमत्। [5]तत् स्थानेषु[5] समतिक्रान्तानामतीतानामार्य[6] श्रावकाणां प्राप्त्युत्पत्तिप्रभेदव्याकरणम्। अपि च सूत्रेषु निरूपितार्थस्य स्फुटीकरणम्। [7]विवृत्याभिसन्धिव्याकरणात्[7]॥

गाथा कतमा। सूत्रेषु[8] पादयोगेन देश्यते। द्विपदी त्रिपदी चतुष्पदी पंचपदी षट्पदी वा॥

उदानं कतमत्। सूत्रेषु[8] कदाचित् तथागतेन आत्तमनस्केन यदुदाहृतम्॥

निदानं कतमत्। पृष्टेन यद् भाषितम्। सोत्पत्तिकं शिक्षाप्रज्ञप्तिकं वा। अतोऽपि निदानम्॥

[Ch. 22b] अवदानं कतमत्। सूत्रेषु[8] सदृष्टान्तकं भाषितम्॥

इतिवृत्तकं कतमत्। यदार्यश्रावकाणां[9] पूर्वलौकिकं वृत्तं देशयति॥

जातकं कतमत्। यत् बोधिसत्त्वचरितपिटक[10]संप्रयुक्तं वृत्तं देशयति[11]॥

१. भो० नास्ति। २ २. भो० आर्य - - - द्वादशाङ्गानि इत्यस्य स्थाने धर्मास्तु। ३. भो० नास्ति। ४. भो० बोधि० नास्ति। ५. भो० तत् स्थानेषु नास्ति। ६. भो० आर्य० नास्ति। ७ ७. भो० एतन्नास्ति। ८. भो० नास्ति। ९. भो० आर्यश्रावकाणां नास्ति। १०. भो० पिटक० नास्ति। ११. भो० वृत्त देशयति नास्ति।

वैपुल्यं कतमत्। बोधिसत्त्वपिटकसंप्रयुक्तं भाषितम्[1]। यदुच्यते वैपुल्यं तद् वैदल्यमप्युच्यते वैतुल्यमप्युच्यते। किमर्थं वैपुल्यमुच्यते। सर्वसत्त्वानां हितसुखाधिष्ठानतः उदारगम्भीरधर्मदेशनातश्च॥ किमर्थमुच्यते वैदल्यम्। सर्वावरणविदलनतः॥ किमर्थमुच्यते वैतुल्यम्। उपमानधर्माणां तुलनाऽभावतः॥

अद्भुतधर्मः कतमः। यत्र[3] श्रावकबोधिसत्त्वतथागतानां परमा[4] द्भुताश्चर्यधर्माणां देशना॥

उपदेशः कतमः। सर्वगम्भीरगूढ[5] धर्मलक्षणानामविपरीतं व्याख्यानम्।

एवं सूत्रादीनि द्वादशाङ्गान्यार्यशासनानि[6] त्रिषु पिटकेषु संगृहीतानि[7] भवन्ति। [8]कतमानि त्रीणि। सूत्रपिटकं विनयपिटकम् अभिधर्मपिटकं च। तानि पुनर्द्विविधानि। श्रावकपिटकं बोधिसत्त्वपिटकं च[9]। सूत्रं [T. 110b] गेयं व्याकरणं गाथा उदानं चैतानि पञ्च[3] श्रावकाणां पिटकस्य सूत्रपिटके संगृहीतानि भवन्ति। निदानमवदानमितिवृत्तकं जातकं चैतानि चत्वारि[10] द्वयोः पिटकयोः सपरिवारे विनयपिटके संगृहीतानि भवन्ति। वैपुल्यमद्भुतधर्मश्च एते द्वे बोधिसत्त्वपिटकस्य सूत्रपिटके संगृहीते भवतः। उपदेश एकः[11] श्रावकबोधिसत्त्वपिटकयोः[12] अभिधर्मपिटके संगृहीतो भवति॥

किमुपादाय तथागतस्य पिटकत्रयव्यवस्थानम्। विचिकित्सोपक्लेशप्रतिपक्षका[13]मतामुपादाय सूत्रपिटकव्यवस्थानम्। अन्तद्वयानुयोगोपक्लेशप्रतिपक्षका[13]मतामुपादाय विनयपिटकव्यवस्थानम्। स्वयंदृष्टिपरामर्शग्रहोपक्लेशप्रतिपक्षकामतामुपादाय अभिधर्मपिटकव्यवस्थानम्। पुनः शिक्षात्रयव्युत्पत्तिकामतामुपादाय सूत्रपिटकव्यवस्थानम्। अधिशीलाधिचित्तशिक्षानिष्पादनकामतामुपादाय विनयपिटकव्यवस्थानम्। अधिप्रज्ञशिक्षानिष्पादनकामतामुपादाय अभिधर्मपिटकव्यवस्थानम्॥ पुनः साध्यंग[1] धर्मार्थव्युत्पत्तिकामतामुपादाय सूत्रपिटक-

१. भो० नास्ति। २. भो० नास्ति। ३. भो० नास्ति। ४. भो० परम० नास्ति। ५. भो० सर्वगम्भीरमूढ० नास्ति। ६. भो० द्वादशाङ्गान्यार्यशासनानि नास्ति। ७. भो० अत्रोत्तरत्र च संगृहीतशब्दो नास्ति। ८...८. भो० कतमानि ---- बोधिसत्त्वपिटकं च यावत् नास्ति। ९. भो० पञ्च नास्ति। १०. भो० चत्वारि नास्ति। ११. भो० नास्ति। १२. भो० श्रावक --- पिटकयोः इत्यस्य स्थाने द्वयोः। १३. भो० अत्रोत्तरत्र च काम० नास्ति।

१. भो० नास्ति।

व्यवस्थानम् । धर्मार्थसाक्षात्क्रियापदस्थानप्रभाविता[2] मुपादाय विनयपिटक-व्यवस्थानम् । ज्ञानिनां[3] सांकथ्यविनिश्चयधर्मसंभोगसुख[4] विहाराश्रयतामुपादाय अभिधर्मपिटकव्यवस्थानम् ॥

स एष पिटकत्रयसंगृहीतो[5] धर्मः कस्य गोचरः । श्रुतमय चिन्तामयभावनामयानां चित्तचैतसिकानां धर्माणां गोचरः ॥ यदुक्तं सूत्रे[6] चित्त[T. 111a]-चैतसिका धर्माः सालम्बनाः साकाराः साश्रयाः ससंप्रयोगाश्च । तेषामस्मिन् धर्मे आलम्बनं कतमत् । सूत्रादिकम् ॥ आकारः कतमः । स्कन्धादयस्तत्संप्रयुक्ताश्चार्थाः ॥ आश्रयः कतमः । परविज्ञप्तिः स्मृतिर्वासना च ॥ संप्रयोगः कतमः । अन्योऽन्यसहायभावेन आलम्बने आकारैः संप्रतिपत्तिः ॥

धर्मे आलम्बनप्रभेदः कतमः । संक्षेपेण[7] चतुर्विधः आख्यातः[8] । व्याप्यालम्बनं चरितविशोधनालम्बनं कौशल्यालम्बनं क्लेशविशोधनालम्बनं च ॥

व्याप्यालम्बनं पुनश्चतुर्विधम्[9] । सविकल्पप्रतिबिम्बालम्बनं[10] निर्विकल्पप्रतिबिम्बालम्बनं वस्तुपर्यन्तालम्बनं[10] कार्यपरिनिष्पत्त्यालम्बनं च ॥ सविकल्पप्रतिबिम्बालम्बनं कतमत् । अधिमुक्तिमनस्कारेण यत् शमथविपश्यनाविषया[11]लम्बनम् ॥ निर्विकल्पप्रतिबिम्बालम्बनं कतमत् । तत्त्वमनस्कारेण यत् शमथविपश्यनाविषयालम्बनम् ॥ वस्तुपर्यन्तालम्बनं कतमत् । सर्वधर्माणां क्षयभाविकता यथावद्भाविकता च ॥ क्षयभाविकता कतमा । स्कन्धधात्वायतनानि ॥ यथावद्भाविकता कतमा । चत्वारि आर्यसत्यानि षोडशाकाराः तथता सर्वे अनित्याः संस्काराः सर्वे दुःखा संस्काराः सर्वेऽनात्मानो धर्माः निर्वाणं शान्तं शून्यमप्रणिहितमनिमित्तं च ॥ कार्यपरिनिष्पत्त्यालम्बनं कतमत् । [T. 111b] आश्रयपरिवृत्तिः । [12]इयमाश्रयपरिवृत्तिरचिन्त्या[12] ॥ षोडशाकारेषु[13] शून्ये कति आकाराः संगृहीता भवन्ति[14] । द्वौ । अप्रणिहिते कति आकाराः संगृहीता भवन्ति[14] । षट् । अनिमित्ते [Ch 232] कत्याकाराः संगृहीता भवन्ति[14] । अष्टौ ।

---

२. भो० प्रभावि- नास्ति । ३. भो० वृद्धानां । ४. भो० सुखस्पर्श० । भो० स्पर्श । ५. भो० पिटकत्रयसंगृहीतो नास्ति । ६. भो० यदुक्तं सूत्रे नास्ति । ७. भो नास्ति । ८. भो नास्ति । ९. भो० कतमत् । १०. भो० अन्यत्तत्र च आलम्बनं नास्ति । ११. भो० विषय० नास्ति । १२ .१२. भो० एतन्नास्ति । १३. भो० षोडशाकार-मध्यात् । षोडशाकारेभ्य इति युज्यते । १४. संगृहीता भवन्ति नास्ति ।

चरित्तविशोधनालम्बनं पञ्चविधम्[1] । भूयोरागचरितानामशुभविषयालम्बनम्[2] । भूयोद्वेषचरितानां करुणा[3]भावना[3] विषयालम्बनम्[2] । भूयोमोहचरितानां निकायप्रत्ययता[4] प्रतीत्यसमुत्पादविषयालम्बनम् । मदमानचरितानां धातुप्रभेदविषयालम्बनम् । वितर्कचरितानामवताराप्रतिघाणि[5] स्मृतिविषयालम्बनम् ॥

कौशल्यालम्बनं पञ्चविधम् । स्कन्धकौशल्यं धातुकौशल्यम् आयतनकौशल्यं प्रतीत्यसमुत्पादकौशल्यं स्थानास्थानकौशल्यं च ॥ स्थानास्थानकौशल्येन कमर्थं[6] पश्यति । [7]ये प्रतीत्यसमुत्पादकौशल्यं पश्यति ॥ स्थानास्थानकौशल्यप्रतीत्यसमुत्पादकौशल्ययोः कः प्रभेदः । यत् धर्मा धर्मानभिनिष्पन्दयन्ति नह्येषां निर्हेतुको नापि विषमहेतुक उत्पाद इतीदं प्रतीत्यसमुत्पादकौशल्यम् । हेतुफलानुरूप्ये वेदयितोत्पाद इतीदं स्थानास्थानकौशल्यम् ॥

क्लेशविशोधनालम्बनं कतमत् । यद्व अधोभूमिकानामौदरिकता ऊर्ध्वभूमिकानां शान्तता तथता चत्वार्यसत्यानि च । [8]एतानि क्लेशविशोधनालम्बनानि नाम[8] ॥

तत्र धर्ममीमांसाकामेन कतिभिर्युक्तिभिर्विचार्यते । [9]चतसृभिर्युक्तिभिः[9] । अपेक्षायुक्तिः कार्यकारणयुक्तिः उपपत्तिसाधनयुक्तिः धर्मतायुक्तिश्च ॥ अपेक्षायुक्तिः कतमा । या संस्काराणामुत्पत्तौ [T. 1122] प्रत्ययापेक्षा ॥ कार्यकारणयुक्तिः कतमा । [10]पृथग्लक्षणानां धर्माणां प्रत्येकं कार्यकारणानि ॥ उपपत्तिसाधनयुक्तिः कतमा । उपपत्तिसाधनार्थं साध्यस्यार्थस्य प्रामाणाविरुद्ध उपदेशः ॥ धर्मतायुक्तिः कतमा । अनादिकालात् स्वलक्षणसामान्यलक्षणस्थितधर्मेषु या[11] धर्मतापरिनिष्पत्तिः सा[11] धर्मता[12] ॥ [13]इति धर्मेषु विचारणा[13] ॥

धर्मेषु[14] कतमाः पर्येषणाः संभवन्ति[15] । चतस्रः पर्येषणाः संभवन्ति[15] । नामपर्येषणा वस्तुपर्येषणा स्वभावप्रज्ञप्तिपर्येषणा विशेषप्रज्ञप्तिपर्येषणा च ॥ नामपर्येषणा कतमा । धर्मेषु नामकायपदकायव्यञ्जनकायानामपरिनिष्पन्नं स्वलक्षण-

१. भो० कतमत् । २. भो० अत्रोत्तरत्र च विषयालम्बनं नास्ति । ३. भो० भावना नास्ति । ४. भो० इदं प्रत्ययता । ५. निष्प्रतिघाणिः इति प्रतीयते । किंतु सर्वत्र अप्रतिघाणिरिति व्यवह्रियते । ६. भो० कथम् । ७. भो० चत्वारि नास्ति । ८...८. भो० एतन्नास्ति । ९...९. भो० एतन्नास्ति । १०. भो० स्व इत्यधिकम् । ११...११. भो० या...सा नास्ति । १२. भो० आख्यायते इत्यधिकम् । १३...१३. भो० एतन्नास्ति । १४. भो० न्यायचरितेषु आतापिनः इत्यधिकम् । १५. भो० नास्ति ।

मिति या सन्तीरणा[1] ॥ वस्तुपर्येषणा कतमा । धर्माणां[2] स्कन्धधात्वायतनानामपरिनिष्पन्नं स्वलक्षणमिति या संतीरणा ॥ स्वभावप्रज्ञप्तिपर्येषणा कतमा । धर्माणा[3] मभिधानाभिधेयसंबन्धे स्वभावप्रज्ञप्तिमात्रस्य व्यवहारनिमित्ततासन्तीरणा ॥ विशेषप्रज्ञप्तिपर्येषणा कतमा । धर्माणामभिधानाभिधेयसम्बन्धे विशेषप्रज्ञप्तिमात्रस्य व्यवहारनिमित्ततासन्तीरणा ॥ [8]इति धर्मपर्येषणाभावना[9] ॥

धर्मेषु[4] यथाभूतपरिज्ञानानि कतमानि संभवन्ति[5] । चत्वारि यथाभूतपरिज्ञानानि । नामपर्येषितं यथाभूतपरिज्ञानं वस्तुपर्येषितं यथाभूतपरिज्ञानं[6] स्वभावप्रज्ञप्तिपर्येषितं यथाभूतपरिज्ञानं[3] विशेषप्रज्ञप्तिपर्येषितं यथाभूतपरिज्ञानं । [ T. 112b ] नामपर्येषितं यथाभूतपरिज्ञानं कतमत् । यथाभूतस्य[7] नामानुपलब्धिज्ञानम् ॥ वस्तुपर्येषितं यथाभूतपरिज्ञानं कतमत् । यथाभूतस्य वस्तुलक्षणानुपलब्धिज्ञानम् ॥ स्वभावप्रज्ञप्तिपर्येषितं यथाभूतपरिज्ञानं कतमत् । यथाभूतस्य द्रव्यस्वभावानुपलब्धिज्ञानम् ॥ विशेषप्रज्ञप्तिपर्येषितं यथाभूतपरिज्ञानं कतमत् । यथाभूतस्य द्रव्यविशेषानुपलब्धिज्ञानम् ॥

धर्ममाश्रित्य[3] समाधिप्रयुक्तस्य[9] योगभूमिः कतमा ज्ञेया । पञ्चाकाराः[10] । आधारः आधानम् आदर्शः आलोकः आश्रयश्च । आधारः कतमः । संभृतबोधि[11]संभारस्य ऊष्मगतादिषु[12] आर्यसत्येषु च यद् बाहुश्रुत्यम् ॥ आधानं कतमत् । तदालम्बनो योनिशो मनस्कारः ॥ आदर्शः कतमः । तदालम्बनः सनिमित्तः समाधिः ॥ आलोकः कतमः । ग्राह्यग्राहकानुपलब्धिज्ञानम् ॥ एतदधिकृत्य सुष्ठु[13] उक्तं बुद्धेन[14] भगवता

प्रतिबिम्बं मनः पश्यन् बोधिसत्त्वः समाहितः ।
व्यावर्त्य विषये संज्ञां स्वसंज्ञामुपधारयन् ॥
एवमात्मस्थचित्तोऽसौ ग्राह्याभावं विबोधयेत् । [ Ph. 2 A6. MS. 36a ] ततश्च ग्राहकाभावं नोपलम्भं स्पृशेत्ततः ॥ इति ।

१. भो० अत्र विचारणा उत्तरत्र संतीरणा । ची० भो० उभयत्रैकः शब्दः । २. भो० धर्माणां नास्ति । ३.-३. एतन्नास्ति । ४. भो० धर्मेषु इत्यस्य स्थाने धर्मपर्येषणायामातापिनः इति, अत्रोत्तरत्र च सम्यगिति विशेषणं च यथाभूतस्य । ५. भो० नास्ति । ६. भो० यथाभूतपरिज्ञानं नास्ति । ७. भो० अत्रोत्तरत्र च यथाभूतस्य नास्ति । ८. भो० धर्मे । ९. भो० आतापिनः । १०. भो० द्रष्टव्याः । ११. भो० बोधि० नास्ति । १२. भो० नास्ति । १३. भो० नास्ति । १४. भो० नास्ति ।

आश्रयः कतमः। आश्रयपरिवृत्तिः ॥[1]

कथं धर्मेषु धर्मकुशलो भवति। चतुष्कुशलतामुपादाय ॥ कथमर्थकुशलो भवति। अभिधर्मे अभिविनये लक्षणकुशलतामुपादाय ॥ कथं व्यञ्जनकुशलो भवति। स्व[2] निरुक्त[T. 113a]व्यञ्जन(ज्ञ)तामुपादाय ॥ कथं निरुक्तिकु(i)शलो भवति। आत्मात्मीयेति[3] जनपदनिरुक्तिमनभिनिविश्यानुव्यवहारज्ञतामुपादाय ॥ कथं [Ch. 23b] पूर्वान्तापरान्तानुसन्धिकुशलो भवति। पूर्वान्ते उद्ग्रहण[4] तामपरान्ते निःसरण[5] तामुपादाय ॥

कथं धर्मेषु धर्मविहारी भवति। भावनामनागम्य केवलश्रुतचिन्ताप्रयोगेण[6] न धर्मविहारी भवति[7](ii)। श्रुतचिन्तामनागम्य केवलभावनाप्रयोगेण न धर्मविहारी भवति[7]। उभयमागम्योभयविहारेण धर्मविहारी भवति[7] ॥ [8]उद्ग्रहाय स्वाध्यायदेशनाभिः श्रुतमयं द्रष्टव्यम्[9] ॥ समाधिप्रयोगासन्तुष्टिभ्यां भावनामयं द्रष्टव्यम् ॥ [10]प्रयोगः सातत्यसत्कृत्यप्रयोगेणाविपरीतप्रयोगेण च द्रष्ट(iii)व्यः ॥ असन्तुष्टिर्नास्वादितोत्तरसमर्थप्रयोगेण द्रष्टव्या ॥

केन कारणेन [11]वैपुल्यं[12] बोधिसत्त्वानां पारमितापिटकमुच्यते। पारमितानां संख्यानिर्देशतामुपादाय लक्षणनिर्देशतामुपादाय क्रमनिर्देशतामुपादाय निरुक्ति-निर्देशतामुपादाय भावनानिर्देशता(iv)मुपादाय प्रभेदनिर्देशतामुपादाय संग्रहनिर्देशता-मुपादाय विपक्षनिर्देशतामुपादाय गुणवर्णननिर्देशतामुपादाय अन्योऽन्यविनिश्चयतां चोपादाय ॥

केन कारणेन वैपुल्यं औदार्यं गाम्भीर्यं च देश्यते। सर्वाकारज्ञता(म्) उदारगम्भीरतामुपादाय ॥ केन कारणेन(v) वैपुल्ये एकत्या(:) सत्त्वा औदार्य-[T. 113b] गाम्भीर्यं नाधिमुच्यन्ते[13] उत्त्रसन्ति। धर्मतावियुक्ततामुपादाय

१. चो. दौष्ठुल्यप्रहाणात् परिशुद्धिलाभः। आश्रयपरिवृत्तिमुपादाय इत्यधिकम्। भाष्ये तु दौष्ठुल्यापगमात् परिशुद्ध आश्रय इत्यर्थ इत्येवमस्य व्याख्यानं दृश्यते। २. ची० भो० स्व० नास्ति। एतच्चिन्त्यम् मा० सु०। ३. मू० आत्मात्मेति पाठः ची० भो० आत्मात्मीय इति। अयं पाठः सुतरां प्रतीयते। ४-५. चो० ०ज्ञ० इत्यधिकं समञ्जसं प्रतीयते। ६. ची० भावनया इत्यधिकम्। तद् व्याख्यानांशोपि भवितुमर्हति। ७. ची उच्यते। ८. ची० धर्मस्य इत्यधिकम्। ९. ची० अर्थचिन्तया चिन्तामयं द्रष्टव्यम्। इत्यधिकम्। एतदपेक्षितमप्यत्र। १०. ची० समाधि०। ११. ची० केवलं इत्यधिकम्। १२. ची० एकांशं इत्यधिकम्। १३. ची० अपितु इत्यधिकम्।

अनवरोपितकुशलमूलतामुपादाय पापमित्रपरिग्रहतां चोपादाय ॥ केन कारणेन वैपुल्ये एकत्याः सत्त्वा[1] अधिमुच्यन्ते । (अधिमुच्य)माना अपि न निर्यान्ति । स्वयं-दृष्टिपरामर्श(vi) स्थायितया[2] । इदं च सन्धायोक्तं भगवता महाधर्मादर्शे धर्मपर्याये बोधिसत्त्वस्य यथारुत[3] मयोनिशो धर्मान्विचिन्वतः अष्टाविंशतिरसद्दृष्टय उत्पद्यन्ते ॥ अष्टाविंशतिरसद्दृष्टयः कतमाः[4] । निमित्तदृष्टिः प्रज्ञप्त्यपवाददृष्टिः परिकल्पापवाद-दृष्टिः(vii) [ Ph. 2 B 6. Ms. 36b ] तत्त्वापवाददृष्टिः परिग्रहदृष्टिः परिणतिदृष्टिः अनवद्यतादृष्टिः निःसरणदृष्टिः अवज्ञादृष्टिः प्रकोपदृष्टिः विपरीतदृष्टिः प्रसवदृष्टिः अनभ्युपगमदृष्टिः कुसृतिदृष्टिः सत्कारदृष्टि दृढमूढतादृष्टिः मूलदृष्टिः दृष्टावदृष्टदृष्टिः प्रयोगनिराकरणदृष्टिः अनैर्या(i)णिकदृष्टिः आवरणोपचयदृष्टिः अपुण्यप्रसवदृष्टिः वैफल्यदृष्टिः निग्राह्यदृष्टिः अभ्याख्यानदृष्टिः अकथ्यदृष्टिः महादृष्टिः अभिमानदृष्टिश्च ॥

यदुक्तं वैपुल्ये निःस्वभावाः सर्वधर्मा इति । तत्र कोऽभिसन्धिः । [ T. 1142 ] स्वयमभावतामुपादाय स्वेनात्मनाऽभावतामुपादाय स्वे भावेऽनवस्थितात्म[5] (ता)मुपादाय बालग्राह(ii)वचालक्षणतामुपादाय ॥ अपि खलु परिकल्पिते स्वभावे लक्षणनिःस्वभावतामुपादाय परतन्त्रे उत्पत्तिनिःस्वभावता-मुपादाय परिनिष्पन्ने[6] परमार्थनिःस्वभावतामुपादाय ॥ [7]अनुत्पन्ना अनिरुद्धा आदिशान्ता(:) प्रकृतिपरिनिर्वृता[8] इति कोऽभिसन्धिः । यथा निःस्वभावा-स्तथा अनु(iii)त्पन्नाः । यथा अनुत्पन्नास्तथा अनिरुद्धाः । यथा अनुत्पन्ना-श्चानिरुद्धाश्च तथा आदिशान्ताः । यथा आदिशान्ता[9]स्तथा प्रकृति-परिनिर्वृताः ॥

अपि खलु चत्वारोऽभिप्रायाः । यैर्वैपुल्ये तथागतानामभिप्रायोऽनुगन्तव्यः । [10]समताऽभिप्रायः कालान्तराभिप्रायः अर्थान्तराभिप्रायः पुद्गलाशयाभिप्रा(iv)यश्च ॥

---

१. ची० औदार्यगाम्भीर्यमित्यधिकम् । मू० सत्त्वाधिमुच्यन्ते । माना अपि इति प्रामादिकः पाठः । अत्र पाठत्रुटिः । विसन्धिश्च । चीते तु अधिमुच्यमाना इत्येव । २. ची० यथारुतमर्थं नित्यदृढाभि-निवेशादित्यधिकम् । भो० यथारुतार्थाभिनिवेशादिति दृश्यते । ३. ची० उपात्तार्थम् इत्यधिकम् । ४. ची० उच्यन्ते इत्यधिकम् । ५. भो० आत्म० नास्ति । मूलं न स्पष्टम् । पतितोऽयमंशो नीचैः प्रदत्तः । तत्र 'ता' न दृश्यते । ६. ची० सत्ये इत्यधिकम् । ७. ची० अपि यदुक्तं सर्वे धर्मा इत्यधिकम् । ८. मू० ०परिनिर्वृतेति पाठः । ९. भो० यथा आदि-शान्ताः इति पतितम् । १०. ची० कतमे चत्वारः इत्यधिकम् ।

चत्वारोऽभिसन्धयो वैपुल्ये तथागतानामभिसन्धिरनुगन्तव्यः[1]। अवतारणाऽभिसंधिः लक्षणाभिसन्धिः प्रतिपक्षाभिसन्धिः परिणामनाभिसन्धिश्च ॥

वैपुल्ये धर्मसमाधिकुशलो बोधिसत्वः कथं प्रत्यवगन्तव्यः । पञ्चभिः कारणैः । प्रतिक्षणं सर्वदौष्ठुल्याश्रयं द्रावयति । नाना(v)त्वसंज्ञाविगतां च धर्मारामरतिं प्रतिलभते । अपरिच्छिन्नाकारं वाऽप्रमाणं[2] धर्मावभासं[3] संजानाति । विशुद्धभागीयानि चास्याविकल्पितानि निमित्तानि समुदाचरन्ति । [4]धर्मकायपरिपूरि[ T. 114b ]परिनिष्पत्तये चोत्तरादुत्तरतरं हेतुमयपरिग्रहं करोति ॥

[5]तत्र पञ्चविधायां भावनायां फलं पञ्चविधं नि(vi)र्वर्त्तितमिति दर्शयति । पञ्चविधा भावना संभिन्नभावना अनिमित्तभावना अनाभोगभावना उत्तप्तभावना परिवृत्तिनिभा(?)भावना यथाक्रमम्[5] ॥

[6]केन कारणेन वैपुल्यधर्मो[7] धूपमाल्यादिभिः पूज्यो न तथा श्रावकधर्मः[8] सर्वसत्त्वहितसुखाधिष्ठानतामुपादाय[9] ॥

अभिधर्मसमुच्चये धर्मविनि(vii) [10]श्चयो नाम तृतीयः समुच्चयः[10] ॥

[ Ch. 24a ] ( महायानाभिधर्मसमुच्चयशास्त्रे विनिश्चये प्राप्तिपरिच्छेदे तृतीये प्रथमो भागः[1] । )

प्राप्तिविनिश्चयः कतमः । [2]संक्षेपतो द्विविधः[2] । पुद्गलव्यवस्थानतः अभिसमय[3] व्यवस्थानतश्च द्रष्टव्यः ॥

---

१, चो० कतमे चत्वारः इत्यधिकम् । २, चो० अप्रमाण वा अपरिच्छिन्नाकारम् इति क्रमः । ३, चो० धर्मावभासं नास्ति । ४, चो० बुद्ध० इत्यधिकम् । ५-५, चो० भो० संदर्भोऽयं नास्ति । भाष्ये पाठस्त्वेवम्—तदेतत् पञ्चविधाया भावनायाः फलं पञ्चविधं निर्वर्त्तत इति सन्दर्शितम् । पञ्चविधा भावना कतमा । प्रश्रब्धिनिमित्तभावना संभिन्नभावना अनिमित्तभावना अनाभोगभावना परिनिर्वृत्तिनिमित्तभावना च ( १०९ क उपरि )। केवलमयमेव संदर्भो न चीने नापि भोटेऽस्ति किन्तु मूले सपाठभेदं भाष्ये चास्ति । ६, चो० श्रावकपिटकधर्मा बोधिसत्त्वपिटकधर्माश्च तथागतधर्मकायेभ्यः प्रवर्त्तन्ते इत्यधिकम् । ७, चो० वैपुल्यानन्तपुण्यप्रसवबोधिसत्त्वपिटकधर्मः । ८, ची श्रावकपिटकधर्मः । ९, चो० महार्थतया निरुत्तराप्रमेयपुण्यप्रसवायतनतामुपादाय । वाक्यमिदं भाष्यतो गृहीतं प्रतीयते । पार्थक्यं तु तत्र 'निरन्तर' इति । १० ..१०, खण्डितोऽयमशः प्रथमपरिच्छेदानुरूपं पूरितः । भो० अभिधर्म० नाम, समुच्चय इति च नास्ति । चो० नास्त्ययमशः । तत्र शैलीत्वन्यथा ।

१, भो० एतन्नास्ति । २, भो० एतन्नास्ति । ३, भा० अधिगम इत्यस्ति । स तु प्रामादिकः प्रतीयते ।

पुद्गलव्यवस्थानं कतमत् । समासतः सप्तविधम्[4] । रोग[5] चरितप्रभेदतः निर्याणप्रभेदतः आधारप्रभेदतः प्रयोगप्रभेदतः फलप्रभेदतः धातुप्रभेदतः चर्याप्रभेदतश्च ॥

रोगचरितप्रभेदः कतमः । सप्तविधः[6] । रागचरितः द्वेषचरितः मोहचरितः मानचरितः वितर्कचरितः समभागचरितः मन्दरजस्क[7] चरितश्च पुद्गलप्रभेदः[8] ॥ निर्याणप्रभेदः कतमः । त्रिविधः[9] । श्रावकयानिकः प्रत्येकबुद्धयानिकः महायानिकश्च पुद्गलप्रभेदः ॥ आधारप्रभेदः कतमः । त्रिविधः[10] । असंभृतसंभारः संभृतासंभृतसंभारः संभृतसंभारश्च पुद्गलप्रभेदः ॥ प्रयोगप्रभेदः कतमः । श्रद्धानुसारी धर्मानुसारी च पुद्गलप्रभेदः ॥ फलप्रभेदः कतमः । सप्तविंशतिविधः[11] । श्रद्धाधिमुक्तः दृष्टिप्राप्तः कायसाक्षी प्रज्ञाविमुक्तः उभयतोभागविमुक्तः [ T. 115a ] स्रोतापत्तिफलप्रतिपन्नकः स्रोतआपन्नः सकृदागामिफलप्रतिपन्नकः सकृदागामी अनागामिफलप्रतिपन्नकः अनागामी अर्हत्त्वफलप्रतिपन्नकः अर्हन् सप्तकृद्भवपरमः कुलंकुलः एकवीचिकः अन्तरापरिनिर्वायी उपपद्यपरिनिर्वायी अनभिसंस्कारपरिनिर्वायी साभिसंस्कारपरिनिर्वायी ऊर्ध्वस्रोताः परिहाणधर्मा अर्हन्[12] चेतनाधर्मा अर्हन् अनुरक्षणाधर्मा अर्हन् स्थिताकम्प्यः अर्हन् प्रतिवेधधर्मा अर्हन् अकोप्यधर्मा अर्हन् च पुद्गलप्रभेदः ॥ धातुप्रभेदः कतमः । कामावचरः पृथग्जनः शैक्षोऽशैक्षश्च । एवं त्रिविधः कामावचरो रूपावचर आरूप्यावचरः । कामावचरो रूपावचरश्च बोधिसत्त्वः कामावचरः प्रत्येकबुद्धः अचिन्त्यश्च तथागतः पुद्गलप्रभेदः ॥ चर्याप्रभेदः कतमः । संक्षेपतः पञ्चविधः[13] । अधिमुक्तिचारी बोधिसत्त्वः अध्याशयचारी बोधिसत्त्वः निमित्तचारी बोधिसत्त्वः अनिमित्तचारी बोधिसत्त्वः अनभिसंस्कारचारी बोधिसत्त्वश्च पुद्गलप्रभेदः ॥

रागचरितः पुद्गलः कतमः । तीव्रा[ T. 115b ]यतरागः । [1]एवं द्वेषचरितो मोहचरितो मानचरितो वितर्कचरितश्च पुद्गलः तीव्रायतविशिष्टः[1] ॥ समभाग-

---

४. भो० एतन्नास्ति । ५. भो० रोग० नास्ति । चीनानुवादेऽपि अनपेक्षित प्रतीयते । ६. भो० नास्ति । ७. भो० तनुतरक्लेश इति प्रतीयते । एतत्तु भाष्ये व्याख्यारूपेण प्रदत्तम् । ८. भो० अत्रोत्तरत्र च केवलं पुद्गलः । प्रभेदो नास्ति । ८, ९. भो० नास्ति । १०. भो० नास्ति । ११. भो० नास्ति । १२. भो० अर्हन् इति नावर्त्यते । १३. भो० एतन्नास्ति ।

१...१. भा० भो० एवं यावद्वितर्कचरितस्तीव्रायतवितर्कः ।

चरितः पुद्गलः कतमः । प्रज्ञातिस्वक्लेशः ॥ मन्दरजस्कचरितः पुद्गलः कतमः । प्रज्ञातिस्थतनुतरक्लेशः ॥

श्रावकयानिकः पुद्गलः कतमः । यः समापन्नो वा असमापन्नो वा श्रावकधर्मताविहारी[1] प्रकृत्या मृद्विन्द्रियः स्वविमुक्तये[3] प्रणिहितः वैराग्यभावनया विमुक्ताशयः श्रावकपिटकमवलम्ब्य वीर्यभावनया[4] धर्मानुधर्मचारी दुःखस्यान्तमनुप्राप्नोति ॥ प्रत्येकबुद्धयानिकः पुद्गलः कतमः । यः समापन्नो वा असमापन्नो वा प्रत्येकबुद्धधर्मताविहारी[2] प्रकृत्या मध्येन्द्रियः स्वविमुक्तये[3] प्रणिहितः वैराग्यभावनया विमुक्ताशयः केवलभावनया चाधिगतबोध्याशयः श्रावकपिटकमवलम्ब्य वीर्यभावनया[4] धर्मानुधर्मचारी अनुत्पादितपूर्वनिर्वेधभागीयः उत्पादितपूर्वनिर्वेधभागीयः अप्राप्तपूर्वफलः अबुद्धलौकिकः[5] अध्यात्म[6] चेतनया आर्य[7] मार्गसंमुखीभूतः खड्गविषाणकल्पः एकविहारी प्रत्येकजिनः धर्मचारी[8] दुःखस्यान्तमनुप्राप्नोति ॥ महायानिकः पुद्गलः कतमः । यः समापन्नो वा असमापन्नो वा बोधिसत्त्वधर्मताविहारी[1] प्रकृत्या तीक्ष्णेन्द्रियः [ T. 116a ] सर्वसत्त्वविमोक्षाय[3] प्रणिहितः अप्रतिष्ठितनिर्वाणाशयः बोधिसत्त्वपिटकमवलम्ब्य वीर्यभावनया[4] धर्मानुधर्मचारी सत्त्वान् परिपाचयति शुद्धां बुद्धभूमिं भावयति व्याकरणं च प्रतिलभते सम्यक्संबोधिं च साक्षात्करोति[9] ॥

असंभृतसंभारः पुद्गलः कतमः । सत्याधिपतेयं धर्ममालम्ब्य मृदुमात्रसमुत्थितः[10] शुद्धश्रद्धाधिमुक्तः मृदुमात्रमोक्षभागीयसमन्वागतः[11] अनियतजन्मकालिकः ॥ संभृतासंभृतसंभारः [ Ch. 24b ] पुद्गलः कतमः । सत्याधिपतेयं धर्ममालम्ब्य मध्यमात्रसमुत्थितः[10] शुद्धश्रद्धाधिमुक्तः मध्यमात्रमोक्षभागीयसमन्वागतो[11] नियतजन्मकालिकः ॥ संभृतसंभारः पुद्गलः कतमः । सत्याधिपतेयं धर्ममालम्ब्य अधिमात्रसमुत्थितः[1] शुद्धश्रद्धाधिमुक्तः अधिमात्रमोक्षभागीयसमन्वा-

२. भो० विहारी नास्ति । ३. ची० अत्र कामार्थकः शब्दो वर्तते । न तु चतुर्थीविभक्तेश्चिह्नमिति प्रतीयते । ४. भो० नास्ति । ५. भो० अबुद्धभवे । ६. भो० आत्मना । ७. भो० आर्य० नास्ति । ८. भो० बहुचारी । भो० शुद्धचारी । ९. भो० अभिसंबुध्यते इति प्रतीयते । १०. भो० समुत्थितः नास्ति । पुद्गलः इत्यधिकम् । ११. भो० ०समन्वागतः नास्ति । बहुव्रीहिसमासे तु न प्रयोजनम् ।

१. भो० समुत्थितः नास्ति । पुद्गल इत्यधिकम् ।

गतः[2] [3]तज्जन्मकालिकः ॥ पुनः असंभृतसंभारः सत्याधिपतेयं धर्ममालम्ब्य सत्येषु मृदुमात्रस्य[4] धर्मनिध्यानक्षान्तिसमन्वागतो मृदुमात्रनिर्वेधभागीयसमन्वागतः[2] अनियतजन्मकालिकः ॥ संभृतासंभृतसंभारः सत्याधिपतेयं धर्ममालम्ब्य सत्येषु मध्यमात्रस्य[4] धर्मनिध्यानक्षान्तिसमन्वागतः मध्यमात्रनिर्वेधभागीयसमन्वागतो[2] नियतजन्मकालिकः ॥ [T. 116b] संभृतसंभारः सत्याधिपतेयं धर्ममालम्ब्य सत्येषु अधिमात्रस्य[4] धर्मनिध्यानक्षान्तिसमन्वागतः अधिमात्रनिर्वेधभागीयसमन्वागतः [3]तज्जन्मकालिकः ॥ [5]तत्र त्रिमात्रनिर्वेधभागीयो[5] लौकिकाग्रधर्मं स्थापयित्वा लौकिकाग्रधर्मप्रवृत्त्यैव क्षणिकः अप्राबन्धिकः[6] ॥ तज्जन्मकालिकः [7]अभिसमयं समापद्यमानोऽपूर्वावस्थः[7] मृदुमध्याधिमात्रमोक्षभागीयेभ्यो [Ph. 2 A 8. Ms. 38a] [निर्वेध]भागीयेभ्यश्च परिहीयते । तच्च समुदाचारपरिहाणितो नो तु वासनापरिहाणितः[9] ॥

श्रद्धानुसारी पुद्गलः कतमः । संभृतसंभारो मृद्विन्द्रियः परोपदेशमनुस्मृत्य यः सत्याभिसमयाय प्रयुज्यते ॥ धर्मानुसारी[9] कतमः । संभृतसंभारस्तीक्ष्णेन्द्रियः स्वयमेव सत्याधिपतेयं धर्ममनुस्मृत्य यः(i) [सत्याभि]समयाय प्रयुज्यते ॥

श्रद्धाधिमुक्तः कतमः । फलकाले[10] श्रद्धानुसारी यः पुद्गलः ॥ दृष्टिप्राप्तः कतमः । फलकाले[10] धर्मानुसारी यः पुद्गलः ॥ कायसाक्षी कतमः । शैक्षः अष्टविमोक्षध्यायी यः पुद्गलः ॥ प्रज्ञाविमुक्तः कतमः । क्षीणास्रवो नोत्वष्टविमोक्षध्यायी यः पुद्गलः ॥ उभयतोभागविमु(ii)[क्तः कत]मः । क्षीणास्रवोऽष्ट[11]विमोक्षध्यायी यः पुद्गलः ॥ स्रोतआपत्तिफलप्रतिपन्नकः कतमः । निर्वेधभागीयेषु पञ्चदशसु[12] दर्शनमार्गचित्तक्षणेषु[13] यः पुद्गलः ॥ स्रोत आपन्नः [T. 117a] कतमः । षोडशे दर्शनमार्गचित्तक्षणे[13] यः पुद्गलः ॥

---

२. भो० समन्वागतः नास्ति । बहुव्रीहिसमासे तु न प्रयोजनम् । ३. भो० तत्त्व० भा० प्रकृति० इति प्रतीयते । ४. भो० सत्य० नास्ति । ५...५. भो० तत्र...... ०भागीयो नास्ति । ६. भो० अप्राबन्धिकः नास्ति । भाष्यतो गृहीतं प्रतीयते । ७..७. भो० अभिसमय... ..अपूर्वावस्थः इत्यस्य स्थाने केवलं केवलार्थकः अपूर्वः । ८. चो० निर्वाणाधिकारिकस्य कुशलमूलस्योत्पादितपूर्वस्यापुनरुत्पाद्यत्वात् इत्यधिकम् । तच्च भाष्ये वर्तते । ९. चो० अत्रोत्तरत्र च सर्वत्र प्रश्ने पुद्गल इति योजितम् । १०. चो० फलप्राप्तिकाले । ११. मू० ०स्रवो अष्ट० इति पाठः । १२. मू० पञ्चदशेषु । १३. चो० भो० स्थित इत्यधिकम् ।

दर्शनमार्ग(:) सम्यक्त्वनियामावक्रान्तिः । धर्माभि(iii) [समये]पि सः । कामेष्ववीतरागः पुद्गलः सम्यक्त्वनियाममवक्रामन्[1] स्रोतआपन्नो भवति ॥ [2]यश्च यो वीतरागः सम्यक्त्वनियाममवक्रामन् सकृदागामी भवति ॥ कामेभ्यो वीतरागः सम्यक्त्वनियाममवक्रामन्ननागामी भवति ॥ यदा दर्शन[3] प्रहातव्यानां [4]क्लेशानां प्रहाणात्(iv) [स्रोत आ]पन्नो भवति ॥ केन कारणेन त्रयाणां संयोजनानां प्रहाणात् स्रोतआपन्नो भवति । प्रधानसंग्रह(त)[5] भवति । प्राधान्यं किमुपादाय । [6]अनुच्चलनकारणतामुपादाय । उच्चलितस्य मिथ्यानिर्याणकारणतामुपादाय[7] । सम्यग्निर्याण( कारण[8] )तां चोपादाय ॥ अपि खलु[9] ज्ञेयविप्र(v)[तिपत्ति]-कारणतामुपादाय दृष्टिविप्रतिपत्तिकारणतामुपादाय प्रतिपक्षविप्रतिपत्तिकारणतां चोपादाय ॥ सकृदागामिफलप्रतिपन्नकः कतमः । भावनामार्गे कामावचराणां पञ्चप्रकाराणां क्लेशानां प्रहाणमार्गे[10] यः पुद्गलः ॥ सकृदागामी[11] कतमः । भावनामार्गे कामावचरस्य षष्ठस्य क्लेशप्रका(vi) [ Ph. 2 B 8 MS. 38b ][रस्य प्र] हाणमार्गे यः पुद्गलः ॥ अनागामिफलप्रतिपन्नकः कतमः । भावनामार्गे कामावचराणां सप्तमाष्टमानां क्लेशप्रकाराणां प्रहाणमार्गे[11] यः पुद्गलः ॥ [ T. 117b ] अनागामी पुद्गलः कतमः । भावनामार्गे कामावचरस्य नवमस्य क्लेशप्रकारस्य प्रहाणमार्गे यः पुद्गलः ॥ यदा[12] सर्वेषां कामावचरा(i)[णां भाव]नाप्रहातव्यानां[12] प्रहाणादनागामी भवति ॥ केन कारणेन पञ्चानामवरभागीयानां संयोजनानां प्रहाणादनागामीत्युच्यते । प्रधानसंग्रहमुपादाय ॥ प्राधान्यं किमुपादाय । गत्यवर[13]कारणतां धात्ववरकारणतां चोपादाय ॥ अर्हत्त्वफलप्रतिपन्नकः कतमः । यावद्भवाग्रिकाणामष्टप्रकाराणां(ii) [क्लेशानां][14] प्रहाणमार्गे यः पुद्गलः ॥ अर्हन्[15]

---

१. मू० अवक्रामत् । २. ची० कामेभ्यः इत्यधिकम् । ३. ची० दर्शनमार्ग० । ४. ची० सर्वेषां इत्यधिकम् । ५. मू० संमहो इति पाठः । ची० भो० संग्रहतः । ६. ची० मुक्तौ इत्यधिकम् । ७. भो० उपादाय प्रत्येकं नावर्त्यते । आदावन्ते च प्रदीयते । ८. ची० भो० कारण इत्यस्ति अपेक्षितं च । मूले पतितं प्रतीयते । ९. ची० त्रीणि संयोजनानि इत्यधिकम् । १०. ची० भो० अत्रोत्तरत्र च सप्तम्यन्ताद् यः पुद्गलः इत्यस्मात्पूर्वं स्थितः इत्यधिकम् । ११. भो० ची० पुद्गलः । १२...१२. ची० सर्वेषां दर्शनमार्गप्रहातव्यानां क्लेशानां कामावचराणां भावनामार्गप्रहातव्यानां वा इति । १३. ची० ०प्रधान० इत्यधिकम् । १४. ची० अष्टमस्य क्लेशप्रकारस्य । १५. मू० अर्हत्त्वं । ची० अर्हत्त्वप्राप्तः इति प्रतीयते ॥

फलमः । भावाग्रिकस्य नवमस्य क्लेशप्रकारस्य प्रहाणमार्गे यः पुद्गलः ॥ यदा त्रैधातुकानां कामावचराणां सर्व्वक्लेशानां प्रहाणादर्हन्[1] भवति ॥ येन कारणेनो· [ Ch. 25a ] र्द्ध्वभागीयानां[2] प्रहाणादर्हन्नित्युच्यते । प्रधानसंग्रहमुपादाय । प्रधान[3] संग्रहः कि(iii) [मुपादाय] । विमोक्षोपादान[4] कारणतामुपादाय । ऊर्द्ध्वा[5]· परित्यागकारणतां चोपादाय ॥ सप्तकृद्भवपरमः[6] फलमः । स्रोतआपन्न एव पुद्गलः सप्तकृत्वोऽपि मिश्रोमिश्र[7] देवमनुष्येषु भवात् संसृत्य यो दुःखस्यान्तमनुप्राप्नोति ॥ कुलंकुलः फलमः । [8]देवेषु वा कुलात्कुलं गत्वा(iv) [मनुष्ये]षु वा यो दुःखस्यान्त· मनुप्राप्नोति ॥ एकवीचिकः फलमः । सकृदागामी[9] देवेष्वेव[10] यो दुःखस्यान्त· मनुप्राप्नोति ॥ अन्तरापरिनिर्वायी फलमः । [11]उपपत्तिसंयोजने प्रहीणे अभि· निर्वृत्तिसंयोजने अप्रहीणे [ T. 118a ] अन्तराभवमभिनिर्वर्त्तयन्नेव यो [12]मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति *अभिनिर्वृत्तो वा अन्तराभवे उपपत्तिभवगम· नाय[13] चेतयन्नेवयो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । अभिसंचेतयित्वा वा उपपत्तिभवमभिसंप्रस्थितः(v) [भवानु]पपत्तिच्छन्द[14] यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति ॥ उपपद्यपरिनिर्वायी फलमः । उभयसंयोजने अप्रहीणे रूपधातावुपपन्नमात्र एव यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति ॥ अनभि· संस्कारपरिनिर्वायी फलमः । उपपन्नः अनभिसं(vi) स्कारेण[15] यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति ॥ अभिसंस्कारपरिनिर्वायी फलमः । उपपन्नोऽभि· संस्कारेण[15] यो मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति ॥ ऊर्द्ध्वस्रोताः फलमः । उपपन्नो रूपावचराणां भूमौ भूमौ यावदकनिष्ठगान् प्रविश्य तत्रानास्रव[16]मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । पुन कश्चिदु[17] यावद्‌ भवाग्रगान् मार्गं संमुखीकृत्य दुःखस्यान्तमनुप्राप्नोति । अपि च व्यवकीर्णभावितस्य चतुर्थस्य ध्यानस्य पञ्चप्रकाराः प्रभेदाः[18] । मृदुपरिभावितं मध्यपरिभावितमधिमात्रपरि·

---

१. मू॰ अर्हद् । २. भो॰ पश्चानां । ची॰ पश्चानां सयोजनानां । इत्यधिकम् । ३. ची॰ प्राधान्यं । ४. भो॰ ऊर्ध्वोपादान॰ । ची॰ ऊर्ध्वभागोपादान॰ । ५. ची॰ ऊर्ध्वभागा॰ । ६. ची॰ प्रश्ने सर्वत्र पुद्गलोऽस्ति । ७. मिश्रामिश्रं [?] । ८. ची॰ स्रोतआपन्न एव पुद्गलः इत्यधिकम् । ९. ची॰ पुद्गल इत्यधिकम् । १०. ची॰ भवात् संसृत्य इत्यधिकम् । ११. ची॰ सकृत इत्यधिकम् । १२. ची॰ अन्नोत्तरत्र च आर्यमार्गं । १३. ची॰ अभिनिर्वर्त्तयन् इत्यधिकम् । १४. ची॰ भो॰ च्छन्दं नास्ति । १५. भो॰ तृतीयान्तं प्रतीयते, ची॰ सप्तम्यन्तम् । १६. भो॰ अनास्रवं नास्ति । १७. भोटतो गृहीतोऽयं शब्दः । १८. भो॰ पञ्चप्रकाराः प्रभेदाः नास्ति ।

भावितमधिमात्राधिमात्रपरिभावितमध्याधिमात्राधिमात्रपरिभावितं च। तैः व्यव[18]कीर्णभावितस्य चतुर्थध्यानस्य पञ्चप्रभेदैः यथाक्रमं पञ्चसु[19] शुद्धावासेषूपपत्तिः॥

परिहाणधर्मा अर्हन् कतमः। मृद्विन्द्रियप्रकृतिको[1] विक्षिप्तो वा अविक्षिप्तो वा चेतयित्वा वा अचेतयित्वा वा दृष्टधर्म[ T. 118b ]सुख विहारात् परिहाणमेति[2]॥ चेतनाधर्मा अर्हन्[3] कतमः। मृद्विन्द्रियप्रकृतिको विक्षिप्तो वा अविक्षिप्तो वा अचेतयित्वा दृष्टधर्मसुखविहारात् परिहाणमेति चेतयित्वा न परिहाणमेति॥ अनुरक्षणाधर्मा अर्हन् कतमः। मृद्विन्द्रियप्रकृतिको विक्षिप्तो दृष्टधर्मसुखविहारात् परिहाणमेति अविक्षिप्तो न परिहाणमेति॥ स्थिताकम्प्यः अर्हन् कतमः। मृद्विन्द्रियप्रकृतिको विक्षिप्तो वा अविक्षिप्तो वा दृष्टधर्मसुखविहारात् न परिहाणमेति नापि इन्द्रियाण्युत्तापयति[4]॥ प्रतिवेधनाधर्मा अर्हन् कतमः। मृद्विन्द्रियप्रकृतिको विक्षिप्तो वा अविक्षिप्तो वा दृष्टधर्मसुखविहारात् न परिहाणमेति केवल[5] मिन्द्रियाण्युत्तापयति॥ अकोप्यधर्मा अर्हन् कतमः। तीक्ष्णेन्द्रियप्रकृतिको विक्षिप्तो वा अविक्षिप्तो वा न दृष्टधर्मसुखविहारात् परिहाणमेति॥

कामावचरः पृथग्जनः[6] कतमः। कामधातावुपपन्नो भवति आर्यधर्मं प्राप्तः[7] पुद्गलः च॥ कामावचरः शैक्षः कतमः। कामधातावुपपन्नो भवति आर्यधर्मं च प्राप्तः पुद्गलः। संयोजनं चावशिष्यते॥ कामावचरोऽशैक्षः कतमः। कामधाता[ T. 119a ]वुपपन्नो भवति आर्यधर्मं च प्राप्तः पुद्गलः। संयोजनं च नावशिष्यते॥ यथा कामावचरास्त्रयः[8] तथा रूपावचरा आरूप्यावचरा अपि[9]॥ कामावचरो रूपावचरो बोधिसत्त्वः कतमः। आरूप्यधातु[10]व्यवकर्षितेन ध्यानेन संप्रयुक्तो ध्यानसुखैर्विहरतीति कामधातावप्युपपन्नो रूपधातावप्युपपन्नः पुद्गलः॥ कामावचरः प्रत्येकबुद्धः कतमः। अबुद्धभवे कामधातौ स्वतः[11] प्रत्येकबुद्ध[12]बोधि-

१८...१९. भो० व्यवकीर्णभावितस्य...पञ्चसु यावन्नास्ति।

१. भो. ०याधिमुक्तिकः। २. भो० अत्रोत्तरत्र च परिहाणमार्गं (आस्रविक ०सौमनस्यवान्) भवतीति प्रतीयते। ३. भो० अत उत्तरं प्रश्ने अर्हन् नास्ति। ४. भो० पूर्ववत् उत्तापनमार्गं सेवते। ५. भो० केवलं नास्ति। ६. चीं० प्रश्ने सर्वत्र पुद्गलः पुद्गल इत्यावर्त्यते। मूले प्रश्नेऽभावान्नात्र प्रदत्तः। ७. भोटेऽपि प्रश्ने पुद्गलो नास्ति। किन्तूत्तरपक्षे सर्वत्र दृश्यते। अतोऽत्रैव प्रदेयः। ८. भो० पुद्गला इत्यधिकम्। ९. भो० त्रयः पुद्गलाः। १०. चीं० उपपन्न इति दृश्यते। पाठोऽयं भोटतो गृहीतः। ११. भो० नास्ति। १२. भो० बुद्ध० नास्ति।

मभिसंबुद्धः[13] ॥ अचिन्त्यः तथागतः कतमः । कामधातौ तुषितभवनवासमारभ्य यावत् महापरिनिर्वाणं दर्शयति[14] सर्वां बोधिसत्त्वचर्यां बुद्धचर्यां महाचर्यां[15] दर्शयतीति पुद्गलः ।

अधिमुक्तिचारी बोधिसत्त्वः पुद्गलः[1] कतमः । अधिमुक्तिचर्याभूमौ स्थितो[2] मृदुमध्याधिमात्रबोधिसत्त्वक्षान्तिसमन्वागतः पुद्गलः[3] ॥ अध्याशयचारी बोधिसत्त्वः पुद्गलः[1] कतमः । दशासु भूमिषु स्थितो यो बोधिसत्त्वः[4] ॥ सनिमित्तचारी बोधिसत्त्वः पुद्गलः[1] कतमः । प्रमुदिताविमलाप्रभाकर्यर्चिष्मतीसुदुर्जयाऽभिमुखी-भूमिषु स्थितो यो बोधिसत्त्वः[5] ॥ अनिमित्तचारी बोधिसत्त्वः[6] पुद्गलः कतमः । दूरंगमभूमौ स्थितो यो बोधिसत्त्वः[7] ॥ अनभिसंस्कारचारी [ Ch. 25b ] बोधिसत्त्वः पुद्गलः कतमः[8] । अचला साधुमतीधर्ममेघासु भूमिषु स्थितो यो [ T. 119b ] बोधिसत्त्वः[7] ॥

पुनः खलु स्रोतआपन्नः पुद्गलो यदुक्तः स द्विविधः । क्रमनैर्याणिकः सकृन्नैर्याणिकश्च । क्रमनैर्याणिको यथा पूर्वमुक्तः ॥ सकृन्नैर्याणिकः सत्याभि-समयमभिसंप्रविष्टः अप्राप्त[9] समापत्तिमाश्रित्य अधिगतेन[10] लोकोत्तरमार्गेण सकृत् त्रैधातुकावचरान् सर्व[11]क्लेशान् प्रजहाति प्रकारशः प्रजहाति[12] । द्वयोः फलयोः स्रोतापत्तिफलार्हत्त्वफलयोः प्रज्ञाप्यते । स च पुद्गलो भूयो दृष्टे धर्मे मरणकाले आज्ञामारागयति । यदि नारागयति प्रणिधानवशेन । तर्हि प्रणिधानवशेन कामधातावेवोपपन्नः अबुद्धभवे प्रत्येकजिनो भवति[13] ॥

( अथ विनिश्चये प्राप्तिपरिच्छेदे तृतीये द्वितीयो भागः )[14]

अभिसमयव्यवस्थानं कतमत् । समासतो दशविधम् । धर्माभिसमयः

१३. चीं॰ साक्षात्क्रियार्थकः शब्दः । १४. भो॰ नास्ति । १५. भो॰ नास्ति ।
१. भो॰ बोधिसत्त्वः पुद्गलः नास्ति । २. भो॰ नास्ति । ३. चीं॰ नास्ति । भो॰ अस्ति ।
४. भो॰ पुद्गलः । तत्र पाठस्त्वेवं प्रतीयते—दशासु बोधिसत्त्वभूमिषु स्थितो यः पुद्गलः । ५. भो॰ पूर्ववत् प्रमुदिता अभिमुखीषु बोधिसत्त्वभूमिषु स्थितो यः पुद्गलः । एवमुत्तरत्र यथायोग्यं योज्यम् ।
६. भो॰ नास्ति । ७. भो॰ यथा । ८. भो॰ यथा १ । ९. ची. *chu hsio wei* ।
भो॰ मे- ल्चोगस्-प-मेद्-प ।
१०. भो॰ नास्ति । ११. मा॰ भो॰ सर्वं नास्ति । १२. भो॰ प्रकारशः प्रजहाति नास्ति ।
मा॰ अस्ति । १३. चीं॰ आक्षरिक॰ प्रत्येकजिनफलं संपादयति । १४. भो॰ नास्ति ।

अर्थाभिसमयः तत्त्वाभिसमयः पृष्ठाभिसमयः रत्नाभिसमयः असमुदाचाराभिसमयः निष्ठाभिसमयः श्रावकाभिसमयः प्रत्येकबुद्धाभिसमयः बोधिसत्त्वाभिसमयश्च ॥

धर्माभिसमयः कतमः। सत्याधिपतेयेषु धर्मेषु अधिमात्रस्य अधिमुक्तिप्रसादस्य प्रतिलम्भः यथासंप्रत्ययं चर्या च ॥

अर्थाभिसमयः कतमः सत्याधिपतेयेषु धर्मेषु अधिमात्रायाः सत्येषु धर्मनिध्यानक्षान्तेः प्रतिलम्भः। सा क्षान्तिः निर्वेधभागीयावस्थां गता[1]। सा[2] पुनस्त्रिविधेन योनिशो [ T. 120a ] मनस्कारेण प्रभाविता। स त्रिविधस्तु अधिमात्रमृदुः अधिमात्रमध्योऽधिमात्राधिमात्रश्च[3]।

तत्त्वाभिसमयः कतमः। षोडशे दर्शनमार्गचित्तक्षणे यं आर्यमार्गं प्रतिलभते। दर्शनमार्गे[4] पुनः सत्ये व्यवस्थापनाद्यभिसमयान्तिकानि संमुखीकरोति। भावनामार्गे तत्संवृतिज्ञानानि प्रतिलभते न तु संमुखीकरोति। भावनामार्गे तत्संवृतिज्ञानबलेन[5] संमुखीकरोति ॥

पृष्ठाभिसमयः कतमः। सर्वो भावनामार्गः ॥

रत्नाभिसमयः कतमः। बुद्धेऽवेत्य प्रसादः धर्मेऽत्य प्रसादः[6] संघेऽवेत्य प्रसादः ॥

असमुदाचाराभिसमयः कतमः। अकारणसंवरलाभात् शिक्षागतस्य[7]-यदात्मनो नरकक्षयं[8] तिर्यग्योनिक्षयः प्रेतयोनिक्षयः अवाङ्पतनदुर्गतिक्षयः इति। न पुनरुपादाय तद् दुर्गतिकर्म दुर्गतिविपाकोऽभिनिर्वर्त्तते ॥

निष्ठाभिसमयः कतमः। यथा मार्गसत्ये निष्ठामार्ग उक्तः ॥

श्रावकाभिसमयः कतमः। पूर्वोक्तः सप्तविधोऽभिसमयः[9]। [10]श्रावकाणां परतो घोषमागम्य प्रतिलम्भतः श्रावकाभिसमय इत्युच्यते[10] ॥

---

१. मो० एतत् पृथग्वाक्यत्वेन न प्रदत्तम्। पूर्ववाक्यस्यादौ च 'निर्वेधभागीयावस्थायां' इत्यस्ति। २. मो० सा क्षान्तिः। ३. मो० एतद् वाक्यमपि तृतीयाविभक्तिविपरिणामेन सा पुनः क्षान्तिः योनिशो मनस्कारेण 'अधिमात्रमृदुना अधिमात्रमध्येन अधिमात्राधिमात्रेण विशेषिता' भवति इत्येवं पूर्ववाक्येऽन्तर्भावितम्। ४. भा० तत्र पुनः। ५. मो० तत्संवृतिज्ञान बलेन नास्ति। ६. मो० अवेत्य प्रसादः नास्ति। ७. चौ० मो०। ८. भाष्ये यस्या कारणस्यार्यकान्तशीलसंगृहीतस्य लाभात्तद्विपक्षनरकाद्यसमुदाचारं प्रत्येवनिश्चयः प्रवर्तते क्षीणात्मनरक इत्येवमादि। अत्र क्षीणात्मनरक इत्यस्य प्रतीकत्वे इदं वाक्यं तथा विपरिणामयितव्यम्। किन्त्वत्र निश्चयार्थक शब्दो न दृश्यते।

प्रत्येकबुद्धाभिसमयः कतमः । पूर्वोक्ताः सप्ताभिसमया[9] । [10]परतो घोषमनागम्य प्रतिलम्भतः प्रत्येकबुद्धाभिसमय इत्युच्यते[10] ॥

बोधिसत्त्वाभिसमयः कतमः । पूर्वोक्तेषु सप्ताभिसमयेषु[11] [Ch. 26a] या समुदागमक्षान्तिः नो तु साक्षात्क्रिया । केवलं बोधिसत्त्व[12]प्रमुदिताभूमौ [T. 120b] बोधिसत्त्वस्य सम्यक्त्वनियामावक्रान्तिः । सा बोधिसत्त्वाभिसमयो वेदितव्यः ॥

श्रावकाभिसमयात् बोधिसत्त्वाभिसमयस्य को विशेषः । संक्षेपत एकादश[1] । आलम्बनविशेषः उपस्तम्भविशेषः प्रतिवेधविशेषः अभ्युपगमविशेषः निर्याणविशेषः परिग्रहविशेषः व्यवस्थानविशेषः प्रतिष्ठापरिवारविशेषः अभिजन्मविशेषः जन्मविशेषः फलविशेषश्च । फलविशेषः पुनर्दशविधः । आश्रयपरिवृत्तिविशेषतः गुणसमृद्धिविशेषतः पञ्चाकारविशेषतः त्रिकायविशेषतः निर्वाणविशेषतः मिश्रोपमिश्रज्ञानशक्तिलाभविशेषतः आवरणविशुद्धिविशेषतः मिश्रोपमिश्रकर्मक्रियाविशेषतः अभिसंबोधिनिर्वाणसन्दर्शनोपायविशेषतः पञ्चाकारपरित्राणविशेषतश्च वेदितव्यः ॥

अप्रमाणादिवैशेषिकगुणानां कतमैरभिसमयैः संग्रहः । पृष्ठाभिसमयनिष्ठाभिसमयाभ्यां संग्रहो वेदितव्यः ॥ तेषां संग्रहः पुनः कतमः[2] । अप्रमाणानि विमोक्षाः अभिभ्वायतनानि कृत्स्नायतनानि अरणाप्रणिधिज्ञानम् प्रतिसंविदः अभिज्ञाः लक्षणानुव्यञ्जनानि परिशुद्धयः बलानि वैशारद्यानि स्मृत्युपस्थानानि अरक्षाणि [T. 121a] असंप्रमोषधर्मता वासनासमुद्घातः महाकरुणा आवेणिका बुद्धधर्माः सर्वाकारज्ञता इत्येवमादयो गुणा[3] यथा सूत्रान्तरेषु निर्दिष्टाः ॥

[4]अप्रमाणानि कतमानि । चत्वारि अप्रमाणानि[4] । मैत्री कतमा । ध्यानं निश्रित्य सत्त्वाः सुखेन संप्रयुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥ करुणा कतमा । ध्यानं निश्रित्य[5] सत्त्वा दुःखेन वियुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा[6] शेषं पूर्ववत् ॥ मुदिता कतमा ।

---

९. भा० त एते सप्ताभिसमयाः । १० .१०. भो० एतन्नास्ति । भाष्यतो गृहीतम् । ११. भो० तेषु । १२. बोधिसत्त्व० नास्ति ।

१. भो० एतन्नास्ति । २ .२. भो० एतन्नास्ति । ३. भो० आदयो गुणाः नास्ति । ४...४. भो० अप्रमाणानि. .अप्रमाणानि नास्ति । उत्तरत्रापि उत्थानिका भोटानुवादे अत्र प्रकरणे न प्रदीयते । विशेषैः प्रश्न आरभ्यते । ५. भो० ध्यानं निश्रित्यं नास्ति । अत्रोत्तरत्र च प्रथमवाक्य एवैतत् प्रदीयते नोत्तरवाक्येषु । ६. भो० समाधिः प्रज्ञा नास्ति । विहारसमृद्धौ इति पूर्ववत् इति पाठः प्रतीयते । एवमुत्तरत्रापि ज्ञेयम् ।

ध्यानं निश्रित्य सत्त्वाः सुखेन न वियुज्येरन्निति विहारसमृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् ॥ उपेक्षा कतमा । ध्यानं निश्रित्य सत्त्वा हित[7] लभेरन्निति विहारसमृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् ॥

[1]विमोक्षाः कतमे । अष्टौ विमोक्षाः[1] । कथं रूपी रूपाणि पश्यतीति । ध्यानं निश्रित्य अध्यात्मं[2] द्रष्टरि रूपसंज्ञाया अविभावनाद् द्रष्टरि रूपसंज्ञायाः[3] संनिवेशनाद् वा द्रश्य[4] रूपाणि पश्यतीति विहारसमृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः [5]यावद् निर्माणावरणाद् विमुक्तिः[5] ॥ कथमध्यात्ममरूपसंज्ञी बहिर्धा रूपाणि पश्यति । ध्यानं निश्रित्य[6] द्रष्टरि[7] रूपसंज्ञाया विभावनाद् अरूपसंज्ञायाः संनिवेशना[ T. 121b ]द्वा द्रश्य[3] रूपाणि पश्यतीति विहारसमृद्धौ समाधि प्रज्ञा[8] शेषं पूर्ववत् ॥ कथं शुभं विमोक्षं कायेन साक्षात्कृत्योपसंपद्य विहरतीति । ध्यानं निश्रित्य[6] अध्यात्मं शुभाशुभेषु रूपेषु अन्योन्यापेक्षासंज्ञाया अन्योन्यानुगमसंज्ञाया अन्योन्यैकरससंज्ञायाश्च लाभात् तत्र लब्धे[9] विहारसमृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् यावत्[5] शुभाशुभनिर्माणात् संक्लेशोत्पत्त्यावरणाच्च विमुक्तिः ॥ आकाशानन्त्यायतनविमोक्षः कतमः । विमोक्षानुकूला[10]काशानन्त्यायतनविमोक्षः तथा विज्ञानानन्त्यायतनाकिंचन्यायतननैवसंज्ञानासंज्ञायतनविमोक्षा अपि द्रष्टव्यः यावत्[5] विमोक्षः शान्तो विमोक्षः असक्त्यावरणं[11] च ॥ संज्ञावेदयितनिरोधविमोक्षः कतमः । नैवसंज्ञानासंज्ञायतनविमोक्षं निश्रित्य समतिक्रान्तानां[12] शिष्टे शान्ते विमोक्षे मोक्षानुसदृशो विहारः विहारसमृद्धौ च चित्तचैतसिकानां निरोधः [13]संज्ञावेदयितनिरोधावरणाद् विमुक्त्यर्थम्[13] ॥

---

७. भो० मनःसुखम् ।

१...१. विमोक्षाः - - विमोक्षाः नास्ति । २. भो० अध्यात्ममिति रूपाणीत्यस्मात् पूर्वम् । ३. भो० द्रष्टरि रूपसंज्ञायाः नावर्त्यते । ४. भो० नास्ति । ५..५. भो० यावद् न दृश्यते इदं च चतुर्थ्यन्तं चतुर्थ्यर्थकं वा प्रतीयते निर्माणावरणाद् विमुक्तये विमुक्त्यर्थमिति वा । तच्च वाक्यस्यादौ । उत्तरत्रापि यावदेवमेव बोध्यम् । ६. भो० ध्यानं निश्रित्य नास्ति । ७. भो० स्वात्मानि इत्यधिकम् । भाष्येपि दृश्यते । ८. भो० समाधिः प्रज्ञा नास्ति । ९. भो० लब्धे नास्ति । १०. भा० विमोक्षक ११. भो० सत्त्यावरणाय (?) । १२. भो० नास्ति । १३...१३. भो० एतत्त वाक्यस्यादौ पूर्ववत ।

[14]अभिभ्वायतनानि फतमानि । अष्टावभिभ्वायतनानि[14] । पूर्वाणि[15] चत्वारि अभिभ्वायतनानि द्वाभ्यां विमोक्षाभ्यां व्यवस्थाप्यन्ते[16] । उत्तराणि[17] चत्वारि अभिभ्वायतनानि एकेन विमोक्षेण व्यवस्थाप्यन्ते[16] । तत्र विमोक्षैरालम्बनमधिमुच्यते अभिभ्वा[T. 122a]यतनेषु आलम्बनमभिभवति । वशवर्त्तनता[18]मुपादाय ॥ सत्त्वसंख्यातानि असत्त्वसंख्यातानि चाश्रित्य रूपाणि परित्ताधिमात्राण्युच्यन्ते । [1]शुभाशुभान्याश्रित्य रूपाणि सुवर्णदुर्वर्णान्युच्यन्ते[1] । मानुष्यकदिव्यान्याश्रित्य रूपाणि[2] हीनप्रणीतान्युच्यन्ते ॥ शिष्टानि यथा विमोक्षेषूक्तानि[3] ॥ आलम्बनाभिभवनतामुपादाय अभिभ्वायतनानीत्युच्यन्ते[4] ॥

[5]कृत्स्नायतनानि फतमानि । दश कृत्स्नायतनानि[5] । कृत्स्नस्फरणालम्बनतामुपादाय कृत्स्नायतनानीत्युच्यते । कृत्स्नस्फरणविहारसमृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः कृत्स्नायतनानीत्युच्यन्ते ॥ किमुपादाय कृत्स्नायतनेषु पृथिव्यादिव्यवस्थापनम् । तैः कृत्स्नायतनैः[6] आश्रयाश्रितरूपाणि पश्यतीति[7] कृत्स्नस्फरणतामुपादाय । शिष्टानि यथायोगं विमोक्षवत् ॥ तथा च कृत्स्नायतनैः परिनिष्पत्तिर्विमोक्षाणाम् ॥

अरणा फतमा । ध्यानं निश्रित्य क्लेशोत्पत्त्यनुरक्षाविहारसमृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥

प्रणिधिज्ञानं फतमत् । ध्यानं निश्रित्य ज्ञेय[8] ज्ञानप्रणिधिसमृद्धौ समाधिः प्रज्ञा[9] शेषं पूर्ववत् ॥

[10]प्रतिसंविदः [ Ch. 26b ] कतमाः । चतस्रः प्रतिसंविदः[10] । धर्मप्रतिसंविद् फतमा । ध्यानं निश्रित्य सर्वधर्म[11]पर्यायेषु अव्याघातसमृद्धौ समाधिः प्रज्ञा[9] शेषं पूर्ववत् ॥ अर्थप्रतिसंविद् फतमा । ध्यानं निश्रित्य[12] लक्षणे अभिप्राये

---

१४...१४. भो० अभिभ्वा - - - भ्वायतनानि नास्ति । १५. भो० नास्ति । १६. भो० विज्ञायन्ते । १७. भो० नास्ति । १८. भो० वशवर्त्तमानता० ।

१..१. भो० एतन्नास्ति । भाष्ये प्रतीयते । २. भो० नास्ति । ३. भो० उक्तानि नास्ति । ४. भो० एतद् वाक्यं परस्मिन् संदर्भेऽन्तर्भावितं तत्र च कश्चित् पाठभेदः प्रतीयते । भोटानुवादस्त्वेवम्—अभिभ्वायतनैः आलम्बनाभिभवनतामुपादाय कृत्स्नायतनानीत्युच्यन्ते ॥ भाष्येऽपि एवमभिभ्वायतनैरालम्बनं वशे वर्त्तयित्वा कृत्स्नायतनैः कृत्स्नं स्फरयति - - - इति दृश्यते ॥ ५...५. भो० कृत्स्नायतनानि - - - कृत्स्नायतनानि नास्ति । ६. भो० नास्ति । ७. भो० नास्ति । ८. भो० इतिज्ञेयं । प्रणिधि - - - (?) इति । ९. भो० समाधि प्रज्ञा नास्ति । १०...१०. भो० प्रतिसंविदः नास्ति । ११. भो० सर्वधर्म० नास्ति । १२. भो० ध्यानं निश्रित्य नास्ति ।

चाव्याघातसमृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् ॥ [T. 122b] निरुक्तिप्रतिसंविद् कतमा। ध्यानं निश्रित्य[13] जनपदभाषायामनुव्यवहारे[13] धर्मनिर्वचने च अव्याघात समृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् ॥ प्रतिभानप्रतिसंविद् कतमा। ध्यानं निश्रित्य धर्मप्रभेदेषु अव्याघातसमृद्धौ समाधिः प्रज्ञा शेषं पूर्ववत् ॥

[14]अभिज्ञा कतमाः। षडभिज्ञाः[14]। ऋद्ध्यभिज्ञा कतमा। ध्यानं निश्रित्य विचित्रर्द्धिविकुर्वित[15] समृद्धौ समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥ दिव्यश्रोत्राभिज्ञा कतमा। ध्यानं निश्रित्य विचित्राणां शब्दानामनुश्रवसमृद्धौ यः समाधिः प्रज्ञा[1] शेषं पूर्ववत् ॥ चेतःपर्यायाभिज्ञा कतमा। ध्यानं निश्रित्य[2] परसत्त्वेषु चित्तचरितपर्याय[3] प्रवेशसमृद्धौ यः समाधि प्रज्ञा शेषं पूर्ववत् ॥ पूर्वनिवासानुस्मृत्यभिज्ञा कतमा। ध्यानं निश्रित्य पूर्वान्तचर्यानुस्मरणसमृद्धौ यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥ च्युत्युपपादाभिज्ञा कतमा। ध्यानं निश्रित्य सत्त्वानां च्युत्युपपादप्रकार[4] संदर्शनसमृद्धौ यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥ आस्रवक्षयाभिज्ञा कतमा। ध्यानं निश्रित्य आस्रवक्षयज्ञानसमृद्धौ यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥

लक्षणानुव्यञ्जनानि कतमानि। ध्यानं निश्रित्य लक्षणानुव्यञ्जनैर्विभ्राजमान-सन्दर्शनसमृद्धौ यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः तत्समुत्थित-विपाकाश्च ॥

परिशुद्धयः कतमाः। चतस्रः परिशुद्धयः[5]। [T. 123a] आश्रयपरिशुद्धिः कतमाः। ध्यानं निश्रित्य यथाकाममाश्रयस्योपादाने स्थानपरित्यागानां समृद्धौ यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥ आलम्बनपरिशुद्धिः कतमा। ध्यानं निश्रित्य यथाकाममालम्बननिर्माणपरिणामनज्ञानानां समृद्धौ यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥ चित्तपरिशुद्धिः कतमा। ध्यानं निश्रित्य यथाकामं समाधि-मुखवशवर्त्तिसमृद्धौ यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥ ज्ञानपरिशुद्धिः कतमा। ध्यानं निश्रित्य यथाकामं धारणीमुखसन्धारणसमृद्धौ यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥

---

१३. मो० अनुव्यवहारे नास्ति। १४...१४. मो० अभिज्ञाः --- अभिज्ञाः नास्ति। १५. एतत् भाष्येऽस्ति। ची. अनुभाव० इत्यधिकम्।

१. मो० यः समाधिः प्रज्ञा नास्ति एवमुत्तरत्रापि। २. मो० ध्यानं निश्रित्य नास्ति एवमुत्तरत्रापि। ३. मो० भा० पर्याय० नास्ति। ४. मो० प्रकार० नास्ति। ५. मो० चतस्रः परिशुद्धयः नास्ति।

[6]बलानि कतमानि। दश तथागतबलानि। स्थानास्थानबलं कतमत्। ध्यानं निश्रित्य सर्वप्रकार स्थानास्थानज्ञानसमृद्धो यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः॥ कर्मस्वकज्ञानबलं कतमत्। ध्यानं निश्रित्य सर्वप्रकार[7]-कर्मस्वकज्ञानसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥ शिष्टानि बलानि यथायोगं वेदितव्यानि॥

[8]वैशारद्यानि कतमानि। चत्वारि वैशारद्यानि॥ अभिसंबोधिवैशारद्यं कतमत्। ध्यानं निश्रित्य स्वार्थमेवारभ्य सर्वाकाराभिसंबोधिप्रतिज्ञाप्रतिष्ठापनसमृद्धो यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः॥ आस्रवक्षयवैशारद्यं [T. 123b] कतमत्। ध्यानं निश्रित्य[1] स्वार्थमेवारभ्य सर्वाकारास्रवक्षयप्रतिज्ञा[2] प्रतिष्ठापनसमृद्धो यः समाधिः प्रज्ञा[3] शेषं पूर्ववत्॥ अन्तरायिकधर्मवैशारद्यं कतमत्। ध्यानं निश्रित्य परार्थमारभ्य सर्वाकारान्तरायिकधर्मप्रतिज्ञाप्रतिष्ठापनसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥ [4]नैर्याणिकप्रतिपद्वैशारद्यं कतमत्। ध्यानं निश्रित्य परार्थमारभ्य सर्वाकार नैर्याणिकमार्गधर्म[5] प्रतिज्ञाप्रतिष्ठापनसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥

[6]स्मृत्युपस्थानानि कतमानि। [7]त्रीण्येव स्मृत्युपस्थानानि॥ गणपरिकर्षणे सर्वाकारसंक्लेशासमुदाचारसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥

[8]अरक्षाणि कतमानि। त्रीण्येवारक्षाणि[9]॥ गणपरिकर्षणे यथाकाममववादानुशासनीप्रयोगसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥

असंप्रमोषधर्मता कतमा। सर्वाकारस्य यथावत् कृतस्स भाषितस्य चाभिलपनसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥

वासनासमुद्घातः कतमः। सर्वज्ञस्य सतः असर्वज्ञचेष्टितासमुदाचारसमृद्धो यः समाधिः प्रज्ञा शेषं पूर्ववत्॥

महाकरुणा कतमा। निरन्तरं सर्वप्रकारदुःखालम्बनकरुणाविहारसमृद्धो यः [Ch. 27a] समाधिः प्रज्ञा शेषं पूर्ववत्॥

---

६ ६. भो० बलानि बलानि नास्ति। ७. भो० प्रकार० नास्ति। ८ ८. भो० वैशारद्यानि वैशारद्यानि नास्ति।

१. भो० ध्यान निश्रित्य नास्ति एवमुत्तरत्रापि। २. भो० प्रतिज्ञा० नास्ति। ३. भो० य. -प्रज्ञा नास्ति एवमुत्तरत्रापि। ४. ची० दुःखनैर्याणिक०। ५. भो० ०शासन०। ६. भो० त्रीणि स्मृत्यु० .। ७ ७ भो० एतन्नास्ति। ८ भो० त्रीणि अरक्षाणि ..। ९. भो० एतन्नास्ति।

आवेणिका बुद्धधर्माः कतमे । [10]अष्टादशावेणिका बुद्धधर्माः ॥ असाधारण कायवाङ्मनस्कर्मपरिशुद्धि [ T. 124a ] समृद्धौ साश्रयाणां सफलानां तथागतेन्द्रियाणामप्राप्त्यामपरिहाणिसमृद्धौ असाधारण कर्मसमुदाचारसमृद्धौ असाधारणज्ञानविहारसमृद्धौ च यः समाधिः प्रज्ञा शेषं पूर्ववत् ॥

सर्वाकारज्ञता कतमा । स्कन्धधात्वायतनानां सर्वाकारज्ञतासमृद्धौ यः समाधिः प्रज्ञा तत्संप्रयुक्ताश्च चित्तचैतसिका धर्माः ॥

एतेषां[11] गुणानामभिनिर्हारः कतमः । विशुद्धानि चत्वारि[12] ध्यानानि निश्रित्य अन्यतीर्थीयः श्रावको बोधिसत्त्वो वा अभिनिर्हरति चत्वारि[13] अप्रमाणा[14] [ Ph. 2A7. Ms. 42a ] न्येवं पञ्चाभिज्ञाः । शेषान् गुणान् प्रान्तकोटिकं चतुर्थं ध्यानं [1]निश्रित्य श्रावको बोधिसत्त्वस्तथागतो वाऽभिनिर्हरति ॥ तत्पुनः किमुपादाय । ध्यानसन्निश्रयेण यथाव्यवस्थानमनसिकारबहुलीकारतामुपादाय ॥

त एते गुणा[2] द्विविधाः । स्वकारित्रप्रत्युपस्थानाश्च वैहारिकाश्च ॥ ये स्वकारित्रप्रत्यु(i)पस्थानाः ते लोकोत्तरपृष्ठलब्धाः संवृतिज्ञानस्वभावा द्रष्टव्याः ॥ ये पुनर्वैहारिकास्ते लोकोत्तरज्ञानस्वभावा द्रष्टव्याः ॥

अप्रमाणैः किं कर्म करोति । विपक्षं जहाति । अनुकम्पाविहारितया पुण्य [ T. 124b ] संभारं परिपूरयति सत्त्वपरिपाके च[3] न परिखिद्यते ॥ विमोक्षैः किं कर्म करोति । निर्माणकर्मा(ii)भिनिर्हरति । [4]शुभनिर्माणे न संक्लिश्यते शान्तेषु विमोक्षेषु न सज्जति । परमप्रशान्तेन चार्यविहारेण विहरति । अधिमुच्यनता[5] मुपादाय ॥ अभिभ्वायतनैः किं कर्म करोति । [6] त्रयाणां विमोक्षाणामालम्बनं वशे वर्त्तयत्यालम्बनाभिभवनतामुपादाय ॥ कृत्स्नायतनैः किं कर्म करो(iii)ति । विमोक्षालम्बनं परिनिष्पादयति कृत्स्नस्फरणतामुपादाय ॥ अरणया किं कर्म करोति । आदेयवचनो भवति ॥ प्रणिधिज्ञानेन किं कर्म करोति । भूतभव्यवर्त्तमानं व्याकरोति बहुमतश्च भवति लोकस्य[7] ॥ प्रतिसंविद्भिः किं कर्म

---

१० ..१०. भो० अष्टादश .धर्माः नास्ति । ११. भो० नास्ति । १२-१३. भो० नास्ति । १४. भो० अप्रमाणानि । यथा अप्रमाणान्येवं - - ।

१. ची० भूयो निश्रित्य । २. ची० समासतः इत्यधिकम् । ३. ची० चित्त इत्यधिकम् । ४. ची० शुभाशुभ० । ५. ची० अधिमुक्तिचेतनताम इति प्रतीयते । ६. ची० पूर्वेषामित्यधिकम् । ७. ची० दूरतः सर्वजनकायसंभाविततामुपादाय । इत्यधिकम् । भा० सर्वं जानातीति गौरवितत्वात् ।

करोति । [8]देशनया सत्त्वचित्तानि संतोषयति[9] ॥ (१७) अभिज्ञाभिः किं कर्म करोति । [10]शासने कायकर्मणा आवर्जयति । वाक्कर्मणा चित्तादेशनयाऽऽवर्जयति[11] सत्त्वचरितं च ज्ञात्वा आगतिं च गतिं च[12] निःसरणे सत्त्वान् यथावदववदते ॥ लक्षणानुव्यञ्जनैः किं कर्म करोति । दर्शनमात्रकेण महापुरुषत्वे संप्रत्ययं जनयति चित्तान्यभिप्रसादय(न्)ति[13] ॥ परिशुद्धिभिः किं कर्म करोति । संचिन्त्य[14] भवोपपत्तिं परिगृह्णाति । आकाङ्क्षयन्कल्पं वा कल्पा[ T. 125a ]वशेषं वा तिष्ठति आयुःसंस्कारान् वा उत्सृजति । धर्मवशवर्त्ती भवति समाधिवशवर्त्ती सद्धर्मं च सन्धारयति ॥ बलैः किं कर्म करोति । अहेतुविषमहेतुवादं प्रत्याख्यायाकृताभ्यागम-(न्) [ Ph. 2B. Ms. 42b ]वादे च सम्यग[1]भ्युदयमार्गं देशयति [2]सत्त्वचित्तचरितानि चानुप्रविश्य देशनाभाजनतां चाशयं चानुशयं चालम्बनं च संभारं च भव्यतां च निःसरणं च यथावन्निःश्रेयसमार्गं देशयति । सर्वमारांश्च निगृह्णाति सर्वत्र च प्रश्नं पृच्छति पृष्टो व्याकरोति ॥ वैशारद्यैः किं कर्म करोति । पर्षदि सम्यगात्मनः(।) शास्तृत्वं व्यवस्थापयति चोदकांश्चान्यतीर्थ्यान्निगृह्णाति ॥ स्मृत्युपस्थानैः किं कर्म करोति । असंक्लिष्टो गणं परिकर्षति ॥ अरक्षैः किं कर्म करोति । निरन्तरं गणमववदते समनुशास्ति ॥ असंमोषधर्मतया किं कर्म करोति । बुद्धकृत्यं न हापयति ॥ वासनासमुद्घातेन किं कर्म करोति । निष्क्लेशः क्लेश(।)प्रतिरूपां चेष्टा[3] ऋ(द)र्शयति ॥ महाकरुणया किं कर्म करोति । षट्कृत्वो रात्रिंदिवसेन[4] लोकं व्यवलोकयति ॥ आवेणिकैर्बुद्धधर्मैः किं कर्म करोति । सर्वश्रावकप्रत्येकबुद्धान् कायवाङ्मनस्कर्मपरिशुद्ध्या प्राप्त्या[5] चारेण विहारेण वाऽभिभवति ॥

---

८. ची० कुशलधर्म० इत्यधिकम् । ९ ची० सर्वसंशय जालच्छेदनतामुपादाय इत्यधिकम् । भा० बहुविचित्रै० प्रकारैः संशयच्छेदनात् । १०. ची० आर्य शासने । ११. चीनानुवादस्त्वेवम्—कायकर्मणा वाक्कर्मणा चित्तादेशनयाऽऽवर्जयति सत्त्वान् आर्यशासने प्रवेशयति । १२. ची० सत्त्वसर्वचित्तचरित च कुशल ज्ञात्वा गति च आगति च । १३ ची अभिप्रसादयति न दृश्यते, चित्ते इति च प्रतीयते । १४ ची० सवीर्यत' बलतो वा ।

१ ची० सम्यगविपरीतम् । भा० सम्यगविपरीत सुगतिमार्ग देशयति । २ ची० सर्व० इत्यधिकम् । भो० नञर्थक' शब्दो न दृश्यते । टी० चेष्टान्न दर्शयति । ची० निषेधार्थक शब्दः pu अस्ति । मूले तु न इति न्द इनि वा न स्पष्टम् । प्रतिरूपशब्दस्यानुरूपार्थकत्वाद् नञ आवश्यक प्रतिभाति । ४. मू० ०दिवसेना । ५. ची० अव्यावृत्त्या इत्यधिकम् ।

सर्वाकारज्ञतया किं कर्म करोति। सर्वसत्त्वानां [T 125b] सर्वसंशयां[6] छिनत्ति धर्मनेत्रीश्च[7] दीर्घकालमवस्थापयति येन परिपक्वा[8] (?क्ष्याः)सत्त्वाः परिपच्यन्ते परिपक्वाश्च विमुच्यन्ते ॥ पञ्चभिसमयेषूत्तरोत्तरं विशिष्टं मार्गं लभमानः पूर्वकं हीनं मार्गं विजहाति[9] संकलनप्रहाणं[10] च साक्षात्करोति। निरुपधिशेषे निर्वाणधातौ श्रावकः[11] सर्व[Ch 27b]मार्गसमवसर्गविहा(?)न्या विजहाति नो तु बोधिसत्त्वः ॥ अतएव बोधिसत्त्वा अक्षयकुशलमूला अक्ष(य)गुणा इत्युच्यन्ते ॥

यान्यव्याकृतवस्तूनि व्यवस्थापितानि किमुपादाय। अयोनिशःपरिप्रश्नतामुपादाय ॥ (अयोनिशः परिप्रश्नता किमुपादाय[12]।) हेतुफलसंक्लेशव्यवदानचिन्तापरिवर्जनतामुपादाय ॥०॥

केन कारणेन बोधिसत्त्वो बोधिम(?)नव[1] वद्यामवक्रान्तः स्रोतापन्नो न भवति। स्रोतःप्रतिपत्त्यपरिनिष्पन्नतामुपादाय ॥ केन कारणेन सकृदागामी न भवति। अप्रमाणसंचिन्त्य[2] भवोपपत्तिपरिग्रहतामुपादाय ॥ केन कारणेनानागामी न भवति। ध्यानैर्विहृत्य कामधातावुपपद्यनतामुपादाय। बोधिसत्त्वः सत्यान्यभि(?) समयेन लब्ध्वा दशसु भूमिषु भावनामार्गेण ज्ञेयावरणप्रतिपक्षमार्गं भावयति न क्लेशावरणप्रतिपक्षमार्गम् ॥ तथा च बोधिप्राप्तः क्लेशावरणं ज्ञेयावरणं च [T. 126a] विजहाति अर्हन् तथागतश्च संपद्यते ॥ स च बोधिसत्त्वः[3] सर्वक्लेशाप्रहाणात् मन्त्रौषधयो विषमिव [4]सर्वक्लेशान् अभिभवति सर्वान् क्लेशान् दोषांश्च नोत्पादयति सर्वासु भूमिषु अर्हन्निव क्लेशान् प्रजहाति[5]।

अपि खलु बोधिसत्त्वो ज्ञेयेषु भावनाकुशलो भवति उपायेषु भावनाकुशलो भवति अभूतपरिकल्पेषु भावनाकुशलो भवति निर्विकल्पेषु भावनाकुशलो भवति तेन कालेन कालमिन्द्रियाण्युत्तापयति।

ज्ञेयं कतमत्। संक्षेपेण षड्विधम्। भ्रान्तिः भ्रान्त्याश्रयः अभ्रान्त्याश्रयः भ्रान्त्यभ्रान्तिः अभ्रान्तिः अभ्रान्तिनिष्यन्दश्च ॥ उपायकौशल्यं कतमत्। संक्षेप-

---

६. मू० ०संशयां छिनत्ति। ७. चो० नेत्रार्थकः शब्दः। ८. परिपाच्या (?)। ९. चो० तदा इत्यधिकम्। १०. भा० सकलप्रहाण। ११. चो० प्रत्येकबुद्ध इत्यधिकम्। १२. चो० भो० एतदस्ति। अपेक्षितं च।

१. मू० बोधिमन्वद्यामवक्रान्तो। २. चो० संचिन्त्य० अत्र न दृश्यते। ३. भो० नास्ति। ४...४. भो० सर्वक्लेशान्...नोत्पादयति नास्ति। ५. भो० नोत्पादयति।

तच्चतुर्विधम्[1]। सत्त्वपरिपाककौशल्यं बुद्धधर्मपरिपूरणकौशल्यं क्षिप्राभिज्ञाकौशल्यं मार्गानुपच्छेदकौशल्यं च॥ अभूतपरिकल्पः कतमः। संक्षेपतो दशविधः। मूलविकल्पः निमित्तविकल्पः निमित्तप्रतिभासविकल्पः निमित्तविकारविकल्पः निमित्तिप्रतिभासविकारविकल्पः परोपनीतविकल्पः अयोनिशोविकल्पः योनिशोविकल्पः अभिनिवेशविकल्पः विक्षेपविकल्पश्च॥ स[7] पुनः दशविधः[8]। अभावविकल्प भावविकल्पः समारोपविकल्पः अपवादविकल्पः एकत्ववि [ T. 126b ] कल्पः पृथक्त्वविकल्पः स्वभावविकल्पः विशेषविकल्पः यथानामार्थविकल्पः यथार्थनामविकल्पश्च॥ निर्विकल्पता कतमा। समासतस्त्रिविधा[9]। सन्तुष्टिनिर्विकल्पता अविपर्यासनिर्विकल्पता निष्प्रपञ्चनिर्विकल्पता च॥ ता इमास्तिस्रः[1] पृथग्जनश्रावकबोधिसत्त्वानां यथाक्रमं वेदितव्याः॥ याऽसौ निमित्ततो[2] निष्प्रपञ्चनिर्विकल्पता[3] तस्याः[4] पुनः अभावस्य पञ्च निमित्तानि। न अमनसिकारतः न मनसिकारसमतिक्रमतः न व्युपशमतः न स्वभावतः न आलम्बनेऽभिसंस्कारतश्च। अपि खलु आलंबनेऽनभिसंस्कारतः[5]। बोधिसत्त्वः प्रकृत्या तीक्ष्णेन्द्रियः कथं पुनः इन्द्रियाण्युत्तापयतीति। तीक्ष्णमृद्विन्द्रियमाश्रित्य तीक्ष्णमध्येन्द्रियमभिनिर्हरति। पुनः तीक्ष्णमध्येन्द्रियमाश्रित्य तीक्ष्णतीक्ष्णेन्द्रियमभिनिर्हरति॥

( इति अभिधर्मसमुच्चये प्राप्तिविनिश्चयो नाम चतुर्थः समुच्चयः॥[6] )

( अथ महायानाभिधर्मसमुच्चयशास्त्रे विनिश्चयभागे सांकथ्यपरिच्छेदश्चतुर्थः[1] )

सांकथ्यविनिश्चयः कतमः। संक्षेपतः[2] सप्तविधः। अर्थविनिश्चयः व्याख्याविनिश्चयः प्रभिद्यसंदर्शनविनिश्चयः संप्रश्नविनिश्चयः संग्रहविनिश्चयः वादविनिश्चयः अभिसन्धिविनिश्चयश्च॥

अर्थविनिश्चयः कतमः। यत्र षडर्थानारभ्य[3] विनिश्चयो भवति॥ कतमे

६. भो० एतन्नास्ति। ७ भो० विक्षेपविकल्पः। ८. भो० नास्ति। ९. भो० एतन्नास्ति।

१. भो० ता इमास्तिस्रः नास्ति। २. यासौ निमित्ततो नास्ति। ३. भो० तु इत्यधिकम्। ४..४. भो० तस्याः - - - निमित्तानि नास्ति। ५. भो० द्रष्टव्या इत्यधिकम्। ६. इदमत्रापेक्षितम्। भो० प्राप्तिविनिश्चयो नाम चतुर्थः समुच्चयः।

१. भो० नास्ति। २. भो० संक्षेपतः नास्ति। ३. भो० पञ्चम्या निर्देशः।

पञ्चार्थाः । स्वभावार्थः हेत्वर्थः फलार्थः कर्मार्थः [ T. 127a ] योगार्थः वृत्त्यर्थश्च ॥ स्वभावार्थस्त्रयः स्वभावाः ॥ हेत्वर्थस्त्रयो हेतवः[4] ॥ उत्पत्तिहेतुः प्रवृत्तिहेतुः सिद्धिहेतुश्च ॥ फलार्थः पञ्चफलानि[5] । विपाकफलं निष्यन्दफलं अधिपतिफलं पुरुषकारफलं विसंयोगफलं च ॥ कर्मार्थः पञ्च कर्माणि[6] । उपलब्धिकर्म कारित्रकर्म व्यावसायकर्म परिणतिकर्म प्राप्तिकर्म च ॥ योगार्थः पञ्च योगाः[7] । सामूहिको योगः आनुबन्धिको योगः सांबन्धिको योगः आवस्थिको योगः [ Ch. 28a ] वैकारिको योगश्च ॥ वृत्त्यर्थः पञ्च वृत्तयः[8] । लक्षणवृत्तिः अवस्थानवृत्तिः विपर्यासवृत्तिः अविपर्यासवृत्तिः प्रभेदवृत्तिश्च ॥

व्याख्याविनिश्चयः कतमः । येन सूत्रान्तान् व्याचष्टे[9] ॥ स पुनः कतमः । संक्षेपेण षड्विधः[10] । परिज्ञेयवस्तु परिज्ञेयोऽर्थः परिज्ञोपनिषद् परिज्ञा[11] परिज्ञाफलम् तत्प्रवेदना च ॥ अपि खलु चतुर्दश मुखानि व्याख्याविनिश्चयस्य[12] । कतमानि चतुर्दश[13] । व्याख्यासंग्रहमुखम् वस्तुसंग्रहमुखम् अङ्गोपाङ्गमुखम् उत्तरोत्तरनिर्हारमुखम् प्रतिक्षेपमुखम् अक्षरपरिणाममुखम् नाशानाशमुखम् पुद्गलव्यवस्थानमुखम् प्रभेदव्यवस्थानमुखम् नयमुखम् परिज्ञादिमुखम् बला [ T. 127b ] बलमुखम् प्रत्याहारमुखम् अभिनिर्हारमुखं च ॥

प्रभिद्यसंदर्शनविनिश्चयः कतमः । यथानिर्दिष्टेषु स्कन्धादिषु धर्मेषु यथायोगमेकावचरकः[14] पूर्वपदकः[15] पश्चात्पदकः द्विकोटिकः त्रिकोटिकः चतुष्कोटिकः ओंकारितः प्रातिक्षेपिक इत्येवमादयः ॥

संप्रश्नविनिश्चयः कतमः । अष्टाकारकायदेशेन अष्टाकारयायदेशेन[1] च

---

४. मोः त्रयो हेतवः नास्ति । ५. मो० पञ्च फलानि नास्ति । ६. ओ० पञ्च कर्माणि नास्ति । ७. मो० पञ्चयोगाः नास्ति । ८. मो० पञ्च वृत्तयः नास्ति । ९. भा० येन सूत्रान्तानामर्थं निर्दिशति ( १२४ क )। १०. मो० संक्षेपेण षड्विधः नास्ति । ११. ची० परिज्ञास्वभावः । भा० मो० परिज्ञा । १२. भा० मो० विनिश्चय नास्ति । १३. मो० एतन्नास्ति । १४. भा० पूर्वपादकः एकावचरको यावत् पश्चात्पदकः पुंलिङ्गेन निर्देशः तत्र सर्वं क्लीबेन । १५. भा० पूर्वपादकः पश्चात्पादक इति पाठः ।

१. अष्टाकारकादेशेन अष्टाकार यायदेशेन—भो० *ni pa bo pu jo che se* । भो० कायदेश = जि-शोस्-चूल्तन् । यायदेश = गङ्-शोस्-चूल्तन् ।

प्रश्नव्याकरणेन सर्वसत्यमिथ्या[2] विनिश्चयः[3]। अपि खलु चत्वारः संप्रश्न[4] विनिश्चयमार्गाः। दूषकः प्रतिष्ठापकः छेदकः बोधकश्च ॥

संग्रहविनिश्चयः कतमः। दशभिः स्थानैः संगृहीतो विनिश्चयः[5] ॥ कतमानि दश स्थानानि। कृत्यानुष्ठानविनिश्चयस्थानम्[6] अवतारविनिश्चयस्थानम् अधिमुक्तिविनिश्चयस्थानम् युक्तिविनिश्चयस्थानम् सांकथ्यविनिश्चयस्थानम् प्रतिवेधविनिश्चयस्थानम् विशुद्धिविनिश्चयस्थानम् अभिनिर्हारपदप्रभेदविनिश्चयस्थानम् अनाभोगाभोगमात्रसर्वार्थसिद्धिविनिश्चयस्थानं च।

वादविनिश्चयः कतमः। संक्षेपतः सप्तविधः[7]। वादः वादाधिकरणं वादाधिष्ठानं वादालंकारः वादनिग्रहः वादनिःसरणं वादे बहुकरा धर्माश्च ॥

प्रथमो[8] वादः पुनः षड्विधः। वादः प्रवादः विवादः अपवादः अनुवादः अववादश्च ॥ वादः सर्वलोकवचनम् ॥ प्रवादः लोकानुश्रुतो वादः। लोकज्ञानप्रवादतः[9] ॥ [ T. 128a ] विवादः परस्परं विरुद्धयोर्वादेऽवस्थानम् ॥ अपवादः परस्परं कोपसंरम्भपारुष्यनवचनम्[10] ॥ अनुवादः विशुद्धज्ञानदर्शनानुकूलः सांकथ्यविनिश्चयः ॥ अववादः सत्वानां[11] असमाहितचित्तानां चित्तसमाधानाय समाहितचित्तानां विमोक्षलाभाय[12] देशनावादः ॥[13]

द्वितीयं वादाधिकरणं राजकुलं[14] वा प्रजाकुलं[15] वा प्रामाणिकानां सहायकानां धर्मार्थकुशलानां श्रमणब्राह्मणानां वादसभा[16] वा।

---

२. भो० सर्वसत्यमिथ्या० नास्ति। ३. भो० पाठस्त्वेव प्रतीयते—अष्टाकारकायदेशेन संप्रश्नविनिश्चयः। यथा कायदेशेन एवं वायदेशेन। ४. भो० संप्रश्न० नास्ति। ५. भो० नास्ति। ६. भो० अत्रोत्तरस्त च स्थानं नास्ति। भाष्येऽपि न दृश्यते। चो० अधिकं प्रतीयते। ७ भो० एतन्नास्ति। ८. चो० अत्र प्रकरणे प्रथमो द्वितीयं तृतीय मित्येवमादयः शब्दाः प्रदत्ताः। ते तु भोटे न दृश्यन्ते नापि मूलरीतेरनुकूलाः ॥ ९. भो. एतन्नास्ति। अर्थोऽपि न स्पष्टः। १०. भो० कोपसंरम्भ० नास्ति। पारुष्यवचनेऽवस्थान मिति पाठश्च। ११. भो० नास्ति। १२. भो० ०लाभ० नास्ति। १३. भो० वादः नास्ति। १४. भो० र्गल-पो-चूद्गस्। १५. शब्दोऽयं महाव्युत्पत्ती युत्युस्माप्यनो गृहीतः। भो० बूस्कोस्-प-ऽदुल्-बडि-स। चो० *che li chia*। भोटे सा तु मिति वर्तते। १६. भो० भा० केवल सभा ( न वाद० ) दृश्यते। भोटे सा तु चीने वादसभानन्तरं प्रजाकूलान्तरं पठिता भाष्येऽपि तदनन्तरं पठिता सर्वं च प्रथमान्तं प्रतीयते। अतः षष्ठ्या निर्देशः।

तृतीयं वादाधिष्ठानं यदधिष्ठाय वादः क्रियते। संक्षेपतो द्विविधम्। साध्यं साधनं च। साध्यं द्विविधम्। स्वभावो विशेषश्च॥ साधनानि अष्टौ[1]। प्रतिज्ञा हेतुः दृष्टान्तः उपनयः निगमनं प्रत्यक्षं अनुमानं आप्तागमश्च॥ साध्यस्य स्वभावः आत्मस्वभावो धर्मस्वभावो वा। विशेषः आत्मविशेषो धर्मविशेषो वा॥ प्रतिज्ञा साध्यस्य स्वरुचितार्थस्य परसंप्रापणविज्ञापना॥ हेतुः तस्मिन्नेव साध्ये अप्रतीतस्यार्थस्य संप्रत्ययनिमित्तं प्रत्यक्षोपलम्भानुपलम्भसमाख्यानम्॥ दृष्टान्तः दृष्टेन अन्तेन अदृष्टस्य अन्तस्य[2] समीकरणसमाख्यानम्॥ उपनयः शिष्टतज्जातीयतद्धर्मोपगमाय नयत्वसमाख्यानम्॥ निगमनं निष्ठागमनसमाख्यानम्॥ प्रत्यक्षं स्वसत्प्रकाशाभ्रान्तोऽर्थः॥ अनुमानं प्रत्यक्षशिष्टसंप्रत्ययः॥ आप्तागमः तदुभयाविरुद्धोपदेशः॥

चतुर्थो वादालंकारः[3] वादाधिष्ठाने सम्यग्युक्तिभिः वादसभायां गम्भीरो निपुणश्च भवतीति वादालंकार इत्युच्यते। स पुनः षड्विधः[3]। स्वपरसमयज्ञता वाक्करणसंपद् वैशारद्यं प्रतिभानं स्थैर्यं दाक्षिण्यं च॥

पञ्चमो [ T. 128b ] वादनिग्रहः कथात्यागः कथासादः कथादोषश्च॥ कथात्यागः स्ववाददोषाभ्युपगमः परवादगुणाभ्युपगमश्च[4]॥ कथासादः[5] अन्यवस्तुप्रतिसरणेन व्यावृत्तिः बाह्यवस्तुवचनेन मूलप्रतिज्ञापरित्यागः क्रोधमदमानम्रक्षादिप्रदर्शनं च[5]॥ यथोक्तं सूत्रे। कथादोषः संक्षेपेण नवविधः। आकुलं संरब्धम् अगमकम् अमितम् अनर्थकम् [ Ch. 28b ] अकालम् अस्थिरम् अप्रदीप्तम् अप्रबद्धं च॥

षष्ठं वादनिःसरणं [6]गुणदोषौ विचार्य वादान्निःसरत्यकरणेन वा प्रतिवादिन्यभाजनतां पर्षदो वैगुण्यमात्मनोऽकौशल्यं च ज्ञात्वा वादं न करोति। प्रतिवादिनि भाजनतां पर्षदो गुणवत्त्वमात्मनः कौशल्यं च ज्ञात्वा वादं करोति॥

---

१. मो० नास्ति। २. मो० अदृष्टस्यान्तस्य नास्ति। ३...३. मो० वादाधिष्ठाने...षड्विधः नास्ति। मा० येन प्रयुक्तो वादी वादं कुर्वाणोऽत्यर्थं शोभते। स पुनः। ४. मा० स्वपरवाददोषगुणाभ्युपगमः। ५...५. मो० अन्यस्मादन्यनियन्त्रणं वा परकथावादो (वा)। सूत्रेभ्यो यथासम्भवं द्रष्टव्यम्। इत्येवं प्रतीयते। मा० अन्येन अन्यप्रतिसरणादिभिः विक्षेपः। यथोक्तं सूत्रे। ६...६. मा० वादान्निःसरत्यकरणेन वा गुणदोषौ विचार्य इति पाठः। मो० अयमंशो नास्ति।

वादे बहुकरा धर्माः समासतस्त्रयः[1] । स्वपरसमयज्ञता यया सर्वत्र निपुणो[2] वादं करोति। वैशारद्यं येन निपुणः[1] समग्रपर्षदि वादं करोति। प्रतिमानं येन निपुणः[2] सर्वान् कठिनान्[3] प्रश्नान् व्याकरोति ॥

अपि खलु स्वहितसुख[4] कामेन वादेषु अभिज्ञातुं प्रवर्त्तितव्यं न परैः[5] विवादं कर्त्तुम्। तदुक्तं भगवता महायाना[6]भिधर्मसूत्रे। बोधिसत्त्वेन वीर्यमारभमाणेन कुशलपक्षप्रयुक्तेन प्रतिपत्तिसारकेण धर्मानुधर्मचारिणा[7] सर्व[8] सत्त्वसंग्राहकेण क्षिप्रमनुत्तरां सम्यक् संबोधिमभिसंबुध्यता द्वादशस्थानधर्मान्[9] समनुपश्यता न परैः सह विवादः कार्यः॥ कतमे द्वादश। अनुत्तरार्थपरमधर्मदेशनायां संप्रत्ययो दुर्लभः। प्राश्निकानामववादग्राहकं चित्तं दुर्लभम्[10]। सभ्या गुणदोषविचारकाश्च दुर्लभा। वादे प्रयुक्तानां[12] षड्दोषविरहो दुर्लभः[13]। कतमे षट्[14]। [T. 129a] असत्पक्षाभिनिवेशदोषः कुसृतिवचनदोषः अकालिकवाक्करणदोषः कथासाददोषः पारुष्यवचनदोषः चित्ताघातदोषश्च। वादे संरम्भाभावो दुर्लभः। वादे परचित्तानुरक्षणं दुर्लभम्। वादे अनुरक्षणेऽपि चित्तसमाधिर्दुर्लभः। वादे चित्तस्य निकर्षपरोत्कर्षकामता[15] दुर्लभा। निकर्षपरोत्कर्षयोरपि चित्तस्यासंक्लेशो दुर्लभः। संक्लिष्टे तु चित्ते[16] स्पर्शविहारो दुर्लभः। अस्पर्शविहारे तु कुशलधर्मभावना दुर्लभा। निरन्तरं कुशलधर्मेऽभाविते तु असमाहितचित्तस्य क्षिप्रं समाधिलाभः [17]समाहितचित्तस्य वा क्षिप्रं विमोक्षलाभो[18] दुर्लभः ॥

अभिसन्धिविनिश्चयः कतमः। उक्तादन्योऽर्थः। नामपदव्यञ्जनकायानां छन्नस्याभिसन्धेः अन्यार्थाभिव्यञ्जने विपरिणामः[19] ॥

---

१. भो० समासतस्त्रयः नास्ति। २. भो० निपुणो नास्ति। ३. भो० नास्ति। ४. भो० सुख० नास्ति। ५. भो० नास्ति। भोटे तु वाक्यमिदं स्वहितकामात् वादो ज्ञेयो न विवादं कर्त्तुम् इत्येवं प्रतीयते। ६. भो० महायान० नास्ति। ७. भो० धर्मानुधर्मचारिणा नास्ति। ८. भो० सर्व० नास्ति। ९. भो० धर्मान् नास्ति। नापि युक्तम्। १०. भो० संप्रत्ययविचिन्तितस्य वादो दुर्लभः। ११. भो० सभापण्डिताः तार्किकाश्च। १२. भो० नास्ति। १३. भो० षण्णां दोषाणां गणनान्तरं वाक्यमिदं निवेशितम्। १४. भो० कतमे षट् नास्ति। १५. भो० निकर्षोत्कर्षौ (पराजयजयार्थकौ)। १६. भो० नास्ति। १७. भो० असमाहित०। १८. भो० ०लाभो नास्ति। १९. भो० नामकायपदकायव्यञ्जनकायानामन्यार्थौ[?]कौ अन्यार्थे विपरिणा…

यथोक्तं सूत्रे[1] । मातरं पितरं हत्वा राजानं द्वौ बहुश्रुतौ[2] ।
राष्ट्रं सानुचरं हत्वा नरो विशुद्ध उच्यते ॥
अपिचोक्तं सूत्रे[3] । अश्रद्धोऽकृतज्ञश्च सन्धिच्छेदी च यो नरः ।
हतावकाशो वान्ताशः स वै उत्तमपुरुषः ॥
[4]पुनश्चोक्तं सूत्रे[4] । असारे सारमतयो विपर्यासे च सुस्थिताः ।
क्लेशेन च सुसंक्लिष्टा लभन्ते बोधिमुत्तमाम् ॥

अपिचोक्तं सूत्रे[5] बोधिसत्त्वो महासत्त्वः[6] पञ्चभिर्धर्मैः समन्वागतो दानपार[ T. 129b ]मितायां क्षिप्रं परिपूरिं लभते[7] । कतमे पञ्च । मात्सर्यधर्मतामनुबृंहयति । दानेन च परिखिद्यते । याचनकं च द्वेष्टि । न किंचित् कदाचिद् ददाति । दूरे च भवति दानस्य ॥ पुनश्चोक्तं सूत्रे[8] । बोधिसत्त्वो महासत्त्वः[9] पञ्चधर्मसमन्वागतो ब्रह्मचारी भवति परमेण विशुद्धेन[10] ब्रह्मचर्येण समन्वागतः ॥ कतमे पञ्च । नान्यत्र मैथुनान्मैथुनस्य निःसरणं पर्येषते । मैथुनप्रहाणेनोपेक्षको भवति । उत्पन्नं च मैथुनरागमधिवासयति । मैथुनप्रतिपक्षेण च धर्मेणोत्त्रस्यति । अभीक्ष्णं च द्वयद्वयं समापद्यते ॥

किमुपादायेदं शास्त्र[11]मभिधर्म[ Ch. 29a ]समुच्चय इति नाम लभते[11a] । [12]संक्षेपतस्त्रिभिरर्थैः[12] । समेत्योच्चयतामुपादाय समन्तादुच्चयतामुपादाय सम्यगुच्चयतां चोपादाय ॥

( इति अभिधर्मसमुच्चये सांकथ्यविनिश्चयो नाम पञ्चमः समुच्चयः ॥ )[13]

---

१. भो० नास्ति । २. भो० द्वौ च श्रोत्रियौ । ३. भो० नास्ति । ४...४. भो० एतन्नास्ति ।
५. भो० नास्ति । ६. भो० नास्ति । ७. भो० दानपारमितां परिपूरयन्ति । ८. भो० नास्ति ।
९. भो० नास्ति । १०. भो० भा० नास्ति । ११. ची० महायान० इत्यधिकम् । भा० नास्ति ।
११a. भो० उच्यते । १२...१२. एतन्नास्ति । १३. भो० इति अभिधर्मसमुच्चयः आचार्यासंगकृतः परिनिष्ठितः । ची० नास्ति । किन्तु मूलानुकूलम् ।

# परिशिष्टम्

## (१) उद्धरणानि

# परिशिष्टम्

## ( २ ) त्रिंशिकाभाष्याभिधर्मसमुच्चययो

### समानसदर्भनिर्देश

अभिधर्मसमुच्चये ५ १० पृष्ठेषु चित्तप्रयुक्तसस्काराणा लक्षणानि वर्णितानि। एतेषा लक्षणाना त्रिंशिकाभाष्ये २० ३२ पृष्ठेषु वर्णितैश्चित्तप्रयुक्तसस्कारलक्षणै सह शब्दार्थसदर्भसाम्य भूयसा वर्तते ॥

## ( ३ ) असाधारणनामानि